# अभिज्ञानशकुन्तलम् ।



या सृष्टिः स्रष्टुराद्या वहति विधिहुतं या हविर्या च होत्री
ये द्वे कालं विधत्त श्रुतिविषयगुणा या स्थिता व्याप्य विश्वम् ।

---

नमो गणेशाय ।

ईशोऽनीशोऽपि नेत्रस्थितपरिलसदनलिनेत्रोऽङ्कवर्ती–
भोगासक्तैरुदासोऽप्यनवमतिरुचिभो दृश्यते भोगिभिर्यः ।
पुष्पेषु प्रीतिकारी दधदपि नितरां यश्च पुष्पेषु वैरी
मालाधन्वा स्वयम्भूरपि हरतु हर सोऽशुभं सञ्चितं नः ॥
यस्याध्यापनमहिमा सञ्चारयति विबुधेतरस्य धियम् ।
सोऽखिलशास्त्रविचाराच्छान्तभ्रान्तिर्गुरुर्जयति ॥
सम्यग्दर्शनधर्म्मशास्त्रनिपुणो व्युत्पत्तिसम्पत्तिमान्
नानागोलविचारणैकचतुरः सिद्धान्तसिद्धेष्वपि ।
काव्यालङ्कृतिनाटकेषु च मतिं लीलायवप्रजो
व्याकारैरभिनयधर्म्महृदयो रत्नाकरेणोद्योतितः ॥
यद्बुद्धिर्लयतालरागनिचये गीतेषु न व्याहता
मध्यस्थो नृपपूरुषप्रतिनिधिर्वादेषु यश्चाभवत् ।
यः सर्व्वं प्रियमभ्युवाच सततं ख्यातैरनेकैर्हितो
येनादौ च विमुच्य लोकमनुजस्नेहेन रामो जितः ॥
तस्यानुजः केशवचन्द्रसूनुर्विदेहजन्मार्ज्जुनमिश्रवंश्यः ।
टीकामभिज्ञानशकुन्तलस्य श्रीकृष्णनाथः कुरुतेऽग्रजन्मा ॥
येषामेतद्दिदृक्षूणां न प्रवेशोऽस्ति नाटकम् ।
अपि प्रवेशयेदेतानेषा टीका प्रवेशिका ॥
व्याख्यायते प्रमाणेन सर्व्वं नानोपपादितं ।
पूर्व्वं व्याख्यानिवादञ्चान्यव्यक्तं प्रयत्नतः ॥
याचे साञ्जलिरेषोऽहं यो यो दोषोऽत्र वर्त्तते ।
तत्पक्षाकारश्रमधिया सर्व्वैः शोधितव्यो बुधैः ॥

नान्द्यन्ते सूत्रधारः॥ अलमतिविस्तरेण। नेपथ्याभिमुखमवलोक्य॥ आर्य्ये यदि नेपथ्यविधानमवसितं तदिहागम्यताम्। (२)

नटी प्रविश्य॥ अज्ज इअम्हि। आणवेदु अज्जो को णिओओ अनुचिट्ठीअदु त्ति। (३)

सूत्र॥ आर्य्ये इयं हि रसभावविशेषदीक्षागुरो विक्रमादित्यस्य

---

रवत्। तथाच विष्णुपुराणे सूर्य्यो जलं मही वह्नि र्वायुराकाशमेव च। दीक्षितो ब्राह्मणः सोम इत्येतास्तनवः स्मृता इति। इदं स्रग्धरा नाम वृत्तम्। तदुक्तं चत्वारो यत्र वर्णाः प्रथममनघतः पञ्चकः सप्तमोऽपि द्वौ तद्वत् षोडशाद्यौ मृगमदमुदिते षोडशान्त्यौ तथान्त्यौ। रम्भास्तम्भोरुकान्ते मुनिमुनिमुनिभि र्दृश्यते चेत् विरामो बाले वृत्तं कवीन्द्रैः सुतनु निगदिता स्रग्धरा सा प्रसिद्धा इति॥

(२) नान्द्यन्त इति। नाटकीयविघ्नविघातायादौ क्रियमाणाशी र्नान्दी सा चात्र स्तुतिरित्यादिश्लोकमयी। यदाह भरतः। यद्यप्यङ्गानि भूयांसि पूर्व्वरङ्गस्य नाटके। तथाप्यवश्यं कर्त्तव्या नान्दी विघ्नप्रशान्तये। देवद्विजनृपादीनामाशीर्व्वादपरायणा। नन्दन्ति देवता यस्मात् तस्मान्नान्दीति कीर्त्तितेति। तदन्ते तत्पाठान्ते तां पठित्वेत्यर्थः। तदुक्तं मालतीमाधवटीकायाम्। सूत्रधारः पठेन्नान्दीं मध्यमस्वरमाश्रित इति। सूत्रधारो नाटकीयकथासूत्रसूचको नटप्रधानभूतः पुमान् आहेति शेषः। एवमुत्तरत्रापि सर्व्वत्र कर्त्तृपदमाहेति क्रियया अध्याहर्त्तव्यया योजनीयम्। उक्तं हि नाटकीयकथासूत्रं प्रथमं येन सूच्यते। रङ्गभूमिं समाक्रम्य सूत्रधारः स उच्यते इति। तद्वचनमाह अलमिति। अतिविस्तरेण वाग्विस्तरेण अलं न कारणीय इत्यर्थः। वारणार्थे न तृतीया। विस्तारो विग्रहो व्यासः स च शब्दस्य विस्तर इति। अलं भूषणपर्य्याप्ति-शक्तिवारणवाचकमिति चामरः। नेपथ्यं वेशरचना। आकल्पवेशौ नेपथ्यमित्यमरः। अत्र तु तदर्थं व्यवधानवत्स्थानं लक्ष्यते। तदभिमुखं यथा स्यात् तथावलोक्य दृष्ट्वा स एव पुनराह आर्य्ये इति। आर्य्ये श्रेष्ठे सा चात्र नटी योग्या उत्तरत्र नटीप्रवेशात्। नेपथ्यविधानं वेशरचनं अवसितं अवसानं गतं समाप्तमिति यावत्। तत् तदा॥

(३) नटीति। प्रविश्य रङ्गभूमिमिति शेषः। अज्जेत्यादि। आर्य्य इयमस्मि। आज्ञापयत्वार्य्यः को नियोगोऽनुष्ठीयतामिति। इयमस्मि अहमिति शेषः। को नियोगो निदेशो अनुष्ठीयतां मयेति शेषः। इति आज्ञापयतु आर्य्यः॥

(४) सूत्रेति। रसाः शृङ्गारादयः। भावयन्ति रसान् जनयन्तीति भावा रसाङ्ग-भूताः। यदाह भरतः। नानाभिनयसम्बद्धान् भावयन्ति रसानिमान्। यस्मात् तस्मादमी

अभिरूपभूयिष्ठा परिषत्। अस्याञ्च कालिदासग्रथितवस्तुना नवेनाभिज्ञानशकुन्तलनामधेयेन नाटकेनोपस्थातव्यमस्माभिस्तत् प्रतिपात्रमाधीयतां यत्नः। (४)

नटी॥ सुविहिदप्पओअदाए अज्जस्स ण किम्पि परिहाइस्सदि। (५)

सूत्र॥ सस्मितम्॥ आर्ये कथयामि ते भूतार्थम्। (६)

आपरितोषाद् विदुषां न साधु मन्ये प्रयोगविज्ञानम्।
बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः॥ (७)

---

भावा विज्ञेया नाट्योक्तिष्विति। तथा पुराणे नाट्यशास्त्रे च द्वयोस्तु रतिभावयोः। समानार्थं तथा चात्र द्वयमैक्येन लक्ष्यत इति। तद्विशेषस्य तत्प्रभेदस्य दीक्षागुरोरुपदेष्टुर्विक्रमादित्यस्य उज्जयिनीनाथस्य हि यथादित्य अभिरूपभूयिष्ठा पण्डितबहुला। प्राज्ञरूपसुरूपाभिरूपा बुधमनोज्ञयोरित्यमरः। परिषत् सभा। तथा अस्यां परिषदि कालिदासेन ग्रथितं प्रबद्धं वस्तु पदार्थो यत्र तत् तेन। भाव पदार्थे धर्म्मे स्यात् सत्ये तत्त्वञ्च वस्तु चेति त्रिकाण्डशेषः। नवेनाचिरभूतेन अभिज्ञानं शकुन्तलाया यत्र तदभिज्ञानशकुन्तलम् तन्नामधेयेन तदाख्येन नाटकेनास्माभिरुपस्थातव्यमुपासितव्यञ्च तत् तस्मात् प्रतिपात्रं प्रतिव्यक्ति यत्न आधीयतामित्यादरतात्। अत्र शकुन्तलाशितस्य सुरत्नसन्त्या शकुन्तलाम्पद तानव्यादि न तु कुन्तलमयत्तिमतीति व्युत्पत्त्या इत्यादि। तदाह महाभारते। (निर्जने तु वने यस्मात् शकुन्तैः परिरक्षिता। शकुन्तलेति नामास्याः कृतञ्चापि ततो मयेति॥)

(५) नटीति। सुविहिदेत्यादि। सुविहितप्रयोगतया आर्यस्य न किमपि परिहास्यते। आर्यस्य भवतः सुविहितप्रयोगतया सुशिक्षितप्रयोगतया किमपि नाट्यादिकं न परिहास्यते हेयं स्यात्॥

(६) सूत्रेति। सस्मितं मन्दहाससहितं। ते इति सम्बन्धमात्रविवक्षायां षष्ठी। भूतार्थं सुचिन्तितं। भूतं क्ष्मादौ पिशाचादौ जन्तौ क्लीवे त्रिषूचिते इति मेदिनी॥

(७) तमेवार्थमाह आपरितोषादिति। विदुषां धीमतामापरितोषात् सन्तोषपर्यन्तं प्रयोगविज्ञानं अभिनयनैपुण्यं आत्मन इति शेषः। साधु उत्कृष्टं न मन्ये। शिक्षितानां विज्ञानां। प्रवीणे निपुणाभिज्ञविज्ञनिष्णातशिक्षिता इत्यमरः। बलवत् अत्यर्थमेवेति प्रौढ़ा तत्तमभिनयमपि चेतश्चित्तं आत्मनि स्वसमीपे अप्रत्ययं अविश्वसनीयम् यद्वा बलवत् शिक्षितानामपीति शिक्षितानामपि चेतः आत्मनि अप्रत्ययं न विश्वासयुक्। अत्र सामान्येन विशेषसमर्थनादर्थान्तरन्यासोऽलङ्कारः। तदुक्तं काव्यप्रकाशे। सामान्यं वा विशेषो वा

नटी ॥ सविनयम् ॥ एवं णेदं । अनन्तरकरणीज्जं दाणीं अज्जो आणवेदु । (८)

सूत्र ॥ आर्ये न किमन्यदस्याः परिषदः श्रुतिप्रमोदहेतो गींतात् करणीयमस्ति । (९)

नटी ॥ अध कदमं उण उदुं अधिकारिअ गाइस्सं । (१०)

---

तदनेन समर्थ्यते । यत्र सोऽर्थान्तरन्यासः साधर्म्येणेतरेण वेति । इयमार्य्या नाम जातिः । यदुक्तं । पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधा । वृत्तमक्षरसंख्यातं जातिर्मात्राकृता भवेदिति । यस्याः पादे प्रथमे द्वादश मात्रास्तथा तृतीये ऽपि । अष्टादश द्वितीये चतुर्थके पञ्चदश सार्य्या इति च । अत्र गणनियमो यथा लक्ष्मैतत् सप्त गणा गोपेता भवति नेह विषमे जः । षष्ठो जश्च न लघु वा प्रथमार्द्धे नियतमार्य्यायाः ॥ षष्ठे द्वितीयलात् परके न्ले मुखलाच्च सयतिपदनियमः । चरमेऽर्द्धे पञ्चमके तस्मादिह भवति षष्ठो लः ॥ आर्य्यायाः पूर्वार्द्धे सप्त गणाः स्युरन्ते गुरुवर्ण एकः । तत्र विषमे प्रथमतृतीयपञ्चमसप्तमकरूपे मध्यगुरुर्गणो न स्यात् । षष्ठो गणो मध्यगुरुर्लघुचतुष्टयात्मको वा स्यात् । तत्र षष्ठे न्ले लघुचतुष्टयात्मके सति द्वितीयलघुवर्णादारभ्य सयति पदं प्रवर्त्तते । परके सप्तमे लघुचतुष्टयात्मके सति प्रथमलघुवर्णादारभ्य पदं प्रवर्त्तते । तथा परार्द्धे पञ्चमगणे लघुचतुष्टयात्मके सति तत्रापि तस्मात् प्रथमाक्षरादारभ्य पदप्रवृत्तिः स्यात् । तथा चरमार्द्धे षष्ठो गण एकलघुवर्णात्मक एव स्यात् न पूर्वार्द्धवत् मध्यगुरुः सर्वलघुर्वा स्यादित्यर्थः । एवमेव पिङ्गलाचार्य्यसूत्रवृत्तौ हलायुधः । अतो व्याख्यानान्तरमनुपादेयम् । गणास्तु चतुर्मात्रात्मकः पञ्चविधः । येयाः सर्वान्तमध्यादिगुरवोऽत्र चतुष्कलाः । गणाश्चतुर्लघूपेताः पञ्चार्य्यादिषु विश्रुता इत्युक्तेः । सर्वगुरुर्गुरुवर्णद्वयम् । अन्त्यगुरुर्गुरुवर्णान्तं लघुवर्णद्वयम् । मध्यगुरुर्लघुवर्णद्वयघटितो गुरुवर्णः । आदिगुरुर्गुरुवर्णपूर्वकं लघुवर्णद्वयम् । तथा लघुवर्णचतुष्टयात्मकः । गकारादिसङ्केतः पश्चाद्वक्ष्यते । एषा रीतिरन्यत्राप्यनुसन्धातव्या ॥

(८) नटीति । सविनयं विनीतभावसन्तुष्टेति भावः । एवमेदमित्यादि । एवमिदं । अनन्तरकरणीयमिदानीमार्य्य आज्ञापयतु । एवमिदमिति सूत्रधारोक्तिस्वीकारः । अनन्तरकरणीयमुत्तरकालकर्त्तव्यम् ॥

(९) सूत्रेति । अस्याः परिषदः श्रुतिप्रमोदहेतोः श्रवणानन्दहेतो गींतादन्यत् किं करणीयमस्ति तदेव कर्त्तव्यमिति भावः ॥

(१०) नटीति । अधेत्यादि । अथ कतमं पुनः ऋतुमधिकृत्य गास्यामि । अथशब्दः प्रश्नद्योतकः । मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ इत्यमरः । कतमं कं निर्द्धारणे डतमः ॥

सूत्र ॥ आर्ये ! नन्विममेव तावदचिरप्रवृत्तमुपभोगक्षमं ग्रीष्मसमयमधिकृत्य गीयताम् । सम्प्रति हि । (११)

सुभगसलिलावगाहाः पाटलसंसर्गसुरभिवनवाताः ।
प्रच्छायसुलभनिद्रा दिवसाः परिणामरमणीयाः ॥ (१२)

नटी ॥ तह ॥ इति गायति । (१३)

खणचुम्बिआइं भमरेहिं उह सुउमारकेसरसिहाइं ।
ओदंसअन्ति दअमाणा पमदाओ सिरीसकुसुमाइं ॥ (१४)

---

(११) सूत्रेति । ननुरनुमार्थे । प्रस्तावधारणात्तत्प्रातुनयामनर्ष नन्वित्यमर । अचिरप्रवृत्तं सम्प्रत्यापतितम् उपभोगक्षममुपभोगार्हमिमं ग्रीष्मसमयमेव तावदधिकृत्य गीयताम् । ग्रीष्मप्रवृत्ति दर्शयति सम्प्रति हीति । हि यस्मात् सम्प्रतीदानीं दिवसा एवमेवमिति श्लोकीयेनान्वय ॥

(१२) सुभगेति । सुभगोऽतिप्रिय सलिलेषु जलेष्ववगाहो मज्जनं येषु ते तथा पाटलस्य तत्कुसुमस्य संसर्गेण सुरभि सुगन्धि वनवाता येषु ते तथोक्ता तथा प्रकृष्टा छाया यत्र तत् प्रच्छायं तत्र सुलभा अयत्नागमा निद्रा येषु ते तथाभूता । तथा परिणामे परिपाके चोपच्छायामिति यावत् रमणीया मनोरमा दिवसा वर्त्तन्त इति शेष । इयमार्य्या जाति । अत्र पूर्व्वार्द्धे पञ्चमस्य लघुवर्णचतुष्टयत्वात् द्वितीयलघुवर्णादारभ्य पदान्तरप्रवृत्ति । प्रथमलघुवर्णे तु पदान्तरीयो नियमित । तत्प्रमाणं तु आर्य्यालक्षणे प्राग् द्रष्टव्यम् ॥

(१३) नटीति । तह तथा । स्वीकारार्थं ॥

(१४) गानमाह क्षणेति । क्षणचुम्बितानि भ्रमरैः पश्य सुकुमारकेसरशिखानि । अवतंसयन्ति दयमाना प्रमदा शिरीषकुसुमानि ॥ क्षण क्षणं क्षणं अल्पकालं क्षणेन निर्व्यापारस्थित्या भ्रमरैश्चुम्बितानि आस्वादितानि । निर्व्यापारस्थितौ कालविशेषोत्सवयो क्षण इत्यमर । तथा सुकुमारा कोमला केसराणां किञ्जल्कानां शिखा येषां तानि । सुकुमारन्तु कोमलमित्यमर । शिरीषकुसुमानि प्रमदा युवतयो दयमाना सदया एव । सौकुमार्य्यादनतिबलप्रयोगेनेत्यर्थ । अवतंसयन्ति कर्णपूरीकुर्वन्ति पश्य । पुंस्युत्तंसावतंसौ द्वौ कर्णपूरेऽपि शेखरे इत्यमर । इयमुद्गाथा नाम गीति । उक्ता सा पिङ्गले । पूर्व्वार्द्धे उत्तरार्द्धे भवति गीतिः सुभगस भणिता । यो सप्तमको गुणो पिङ्गलनरेन्द्र भणितवाक्यो ॥ पूर्व्वार्द्धे उत्तरार्द्धे मात्रासमपादिति सुभगस भणिता । सा उद्गाथा उक्ता पिङ्गलकविदृष्टपरिमाणाकारा इत्यर्थ ॥

सूत्र॥ आर्य्ये साधु गीतम्। अहो रागापहृतचित्तवृत्तिरालिखित इव विभाति सर्व्वतो रङ्गः। तदिदानीं कतमं प्रयोगमाश्रित्यैनमाराधयामः। (१५)

नटी॥ णं पढमं ज्जेव्व अज्जेण आणत्तं अहिण्णाणसउन्तलं णाम अउव्वं णाडअं पअहीअदु त्ति। (१६)

सूत्र॥ आर्य्ये सम्यगनुबोधितोऽस्मि। अस्मिन् क्षणे खलु विस्मृतं मयैतत्, कुतः (१७)

तवास्मि गीतरागेण हारिणा प्रसभं हृतः।
एष राजेव दुष्मन्तः सारङ्गेणातिरंहसा॥ (१८)

इति निष्क्रान्तौ।

प्रस्तावना। (१९)

---

(१५) सूत्रेति। अहो विस्मये रङ्गो नाट्यसभा रागेण स्वरविशेषेणापहृता चित्तवृत्तिर्मनोवृत्तिर्यस्य स तथोक्तः सन् आलिखितश्चित्रित इव सर्व्वत्र सर्व्वतः विभाति प्रकाशते। तत् तावत् कतमं कं प्रयोगं नाटकाभिनयमाश्रित्य एनं रङ्गम् आराधयाम अनुरञ्जयाम वयमिति शेषः॥

(१६) नटीति। णमित्यादि। ननु प्रथममेवार्य्येणाज्ञप्तम् अभिज्ञानशकुन्तलं नाम अपूर्व्वं नाटकमभिनीयतामिति। नन्वनुप्रश्ने। ननुशब्दो विनिश्चये अनुप्रश्ने इति मेदिनी। अपूर्व्वं नवं। इति व्याख्यामित्यन्वयः॥

(१७) सूत्रेति। सम्यगनुबोधितः सम्यक् स्मारितः। त्वयेति शेषः। अस्मिन् क्षणे खलु अस्मिन् क्षण एव हेतुमाह कुत इति॥

(१८) तवेति। अतिरंहसा वेगातिशयेन सारङ्गेण मृगेण। चातके हरिणे पुंसि सारङ्गः शबले त्रिषु इत्यमरः। एष राजा दुष्मन्त इव हारिणा मनोहारिणा तव गीतरागेण गीतस्वरेणाहं प्रसभं बलात् हृतोऽपहृतचित्तवृत्तिरस्मि। राजपक्षे हृतः सुदूरं प्रापित इत्यर्थः। इदमनुष्टुभं नाम वृत्तम्। तदुक्तं पञ्चमं लघु सर्व्वत्र सप्तमं द्विचतुर्थयोः। षष्ठं गुरु विजानीयादित्यनुष्टुभलक्षणमिति॥

(१९) इतीति। निष्क्रान्तौ रङ्गभूमेरपगतौ नटीनटाविति शेषः। प्रस्तावना प्रस्तुतोद्भावनम्। तल्लक्षणं यथा। नटी विदूषको वापि पारिपार्श्विक एव वा। सूत्रधारेण सहिताः संलापं यत्र कुर्व्वते। चित्रैर्वाक्यैः स्वकार्य्योत्थैः प्रस्तुताक्षेपिभिर्मिथः। आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि सेति। सा चात्रावलगिताख्या। तदुक्तं यत्रैकत्र समावेशात् कार्य्यमन्यत् प्रसाध्यते। प्रयोगे खलु तज्ज्ञेयं नाम्नावलगितं बुधैरिति। अवलगितात् नाटकोद्घाटनात्॥

सविस्मयम्॥ कथमनुपतत एव मे प्रयत्नप्रेक्षणीयः संवृत्तोऽयं मृगः। (२५)

सूतः॥ उद्घातिनी भूमिरिति रश्मिसंयमनात् रथस्य मन्दीभूतो वेगः तेनैष मृगो विप्रकृष्टः संवृत्तः। सम्प्रति हि समदेशवर्त्ती न ते दुरासदो भविष्यति। (२६)

राजा॥ तेन हि मुच्यन्तामभीषवः। (२७)

सूतः॥ यथाज्ञापयत्यायुष्मान्॥ इति भूयो रथवेगं रूपयित्वा॥ आयुष्मन् पश्य पश्य। एते हि (२८)

मुक्तेषु रश्मिषु निरायतपूर्व्वकायाः
स्वेपामपि प्रसरता रजसामलङ्घ्याः।
निष्कम्पचामरशिखाश्चुतकर्णभङ्गा.
धावन्ति वर्त्मनि तरन्ति नु वाजिनस्ते॥ (२९)

---

उच्च प्लुतं अभ्यागति येन स तथाभूतत्वात्। उच्चप्राम्भूत्नतोदग्रोच्छ्रितास्तुङ्गे इत्यमरः। वियति व्योम्नि बहुतरं उर्व्यां भुवि स्तोकमल्पं प्रयाति गच्छति पश्य। इदं स्रग्धरा नाम वृत्तम्। अत्र स्वभावोक्तिरलङ्कारः। तदुक्तं दण्डिना। नानावस्थं पदार्थानां रूपं साक्षाद् विवृण्वती। स्वभावोक्तिश्च जातिश्चेत्याद्या सालङ्कृतिरिति॥

(२५) सविस्मयमिति। विस्मयसहितमाहेत्यर्थः। प्रयत्नप्रेक्षणीयः कष्टाद्निरीक्षणीयः। संवृत्तः सम्भूतः॥

(२६) सूत इति। उद्घातयति पादस्खलनं जनयतीत्युद्घातिनी निम्नोन्नता। उद्घातः कथ्यते पादस्खलनम् इति विश्वः। इति हेतोः। रश्मिसंयमनात् प्रग्रहाकर्षणात्। किरणप्रग्रहौ रश्मी इत्यमरः। मन्दीभूतोऽल्पीभूतः। मूढाल्पापटुनिर्भाग्या मन्दाः इत्यमरः। विप्रकृष्टो दूरवर्त्ती। सम्प्रति इदानीम्। समदेशवर्त्ती समतलभूमिवर्त्ती रथ इति शेषः। दुरासदो दुष्प्रापः॥

(२७) राजेति। अभीषवः प्रग्रहाः। अभीषुः प्रग्रहे रश्माविरत्यमरः॥

(२८) सूत इति। यथेत्यादि तत् क्रियते इति शेषः। इति उक्त्वेत्यर्थः। भूयो रथवेगमभिप्रायेण रथवेगम्। रूपयित्वा रूपयित्वा। एते इति श्लोकीयवाजिन इति विशेषणम्॥

(२९) मुक्तेष्विति। रश्मिषु प्रग्रहेषु मुक्तेषु शिथिलीकृतेषु सत्सु निरायतो ऽतिदीर्घः पूर्व्वकायो देहपूर्व्वभागो येषां ते तथोक्ताः। तथा प्रसरता धावनसमयोचित

राजा॥ सहर्षम्॥ नूनमतीत्य हरिणं हरयो वर्त्तन्ते। यतः (३०)

यदालोके सूक्ष्मं व्रजति सहसा तद् विपुलता
यदर्द्धा विच्छिन्नं भवति कृतसन्धानमिव तत् ।
प्रकृत्या यद् वक्रं तदपि समरेखं नयनयो-
र्न मे दूरे किञ्चित् क्षणमपि न पार्श्वे रथजवात् ॥ (३१)

---

दक्षिणवाताहितोत्तराभिमुखवेगवता स्वेषां खुरोत्थाना रजसा पांशूनामपि अलङ्घ्या अनतिक्रमणीया अस्मानादुत्तराभिमुखगमनादेतेन विशेषणेन वाताधिको वेगो दर्शित । तथा निष्कम्पा वेगातिशयात् स्थिरीभूताश्चामराणां शिरोगतानां शिखा अग्राणि येषां ते । तथा च्युता अपगता कर्णानां भङ्गा अवनतयो येषां ते ऊर्द्धीकृतकर्णा इति यावत् । ते तव एते वाजिनश्चत्वारस्तुरगा वर्त्मनि मार्गे धावन्ति तु किं तरन्ति प्लवन्ते इति पश्य पश्येति पूर्वेणान्वय । अत्र निष्कम्पचामरशिखा निभृतोर्द्धकर्णा धावन्त्यमी मृगजवाक्षमयेव रथ्या

सूत ॥ पश्येन व्यापादयम् । (३२)

राजा ॥ शरसन्धानं नाटयति ॥ (३३)

नेपथ्ये ॥ भो भो राजन् आश्रममृगोऽयं न हन्तव्यो न हन्तव्यः । (३४)

सूत ॥ आकर्ण्य अवलोक्य च ॥ आयुष्मन् अस्य खलु ते बाणपातपथवर्त्तिनः कृष्णसारस्यान्तरायौ तपस्विनौ संवृत्तौ । (३५)

राजा ॥ ससम्भ्रमम् ॥ प्रगृह्यन्तामभीषवः । (३६)

सूत ॥ यथाज्ञापयत्यायुष्मान् ॥ इति तथा करोति ॥ (३७)

॥ ततः प्रविशति सशिष्यो वैखानसः ॥ (३८)

वैखा ॥ हस्तमुद्यम्य ॥ भो भो राजन् आश्रममृगोऽयं न हन्तव्यो न हन्तव्यः (३९)

---

अत्र प्रथमपादार्थं पुरोवर्त्तिविषयं द्वितीयतृतीयपादार्थौ पश्चाद्वर्त्तिविषयाविति कश्चित् । वस्तुतो द्वितीयतृतीयपादाभ्यां पार्श्वस्य वर्ण्यते । इदं शार्दूलविक्रीडितं नाम वृत्तम् । तदुक्तम् । एवगुणोपेतं ... ललितकमले मस्तु गुरवस्तु ते सार्व्वभौम पुत्रमाप्नुहि लभस्व । छन्दोभङ्गप्रसक्तौ पुत्रमप्नोऽत्र हृस्वादि । तथाच पिङ्ग । प्राक्यपरागयो । पुर स्वर्गौकन्दपयोरिति । अन्यत्र दीर्घादिरपि दृश्यते तथाच मत्स्यपुराणम् । तस्मादेव च राजर्षेः शर्म्मिष्ठा वार्षपर्व्वणी । द्रुह्युञ्चानुं च पूरुं च त्रीन् कुमारानजीजनदिति । अतएव वक्ष्यति सेयपूरुवाद्मवीति ॥

(४५) इतर इति । इतरो वैखानसशिष्यः । सर्व्वथा सर्व्वप्रकारेणेत्यर्थः । सर्व्वथा चेद वाच्ययोरिति मेदिनी ॥

(४६) राजेति । प्रतिगृहीत वचनम् ॥

(४७) वैखेति । समिधां आहरणाय वयं प्रस्थिता गच्छाम । वर्त्तमाने क्त । अधिष्ठेयप्रत्याकृद इति बहुवचनम् । अनुमालिनीतीरं मालिन्या नद्यास्तीरस्य समीपे । सामीप्यार्थेऽव्ययीभावः । शकुन्तलयैव साधिदैवतं साधिष्ठातृकम् । प्राधान्येन धम्मानिति तत् शकुन्तलयेत्यभेदे तृतीया । एषोऽस्माकं गुरोरुपाध्यायस्य कण्वस्य तदाख्यस्य कुलपतेर्भेदाच्छात्राध्यापकस्य आश्रमो मठश्च दृश्यते । मठाश्रम्यौ दिघतुष्के मठादौ चाश्रमोऽस्त्रियामिति रुद्र । चेद् यदि अन्यकार्य्यस्य कर्म्मान्तरस्यातिपातोऽतिक्रमो न स्यात् तत् तदा अत्र आश्रमे प्रविश्य अतिथिसत्कारोऽतिथिसपर्य्या प्रतिगृह्यताम् । उत्सङ्गयितुमाह अपि चेति ॥

(४८) धर्म्यां इति । तप एव धर्म्म येषां ते तपोधनास्तपस्विनस्तेषां प्रतिहता अप

राजा ॥ अपि सन्निहितोऽत्र कुलपतिः ॥ (४९)

वैखा ॥ इदानीमेव दुहितरं शकुन्तलामतिथिसत्कारायादिश्य दैवमस्याः प्रतिकूलं शमयितुं सोमतीर्थं गतः (५०)

राजा । भवतु तामेव द्रक्ष्यामि । सा खलु विदितभक्तिं मां महर्षेः निवेदयिष्यति ॥ (५१)

वैखा ॥ साधयामस्तावत् ॥ इति सशिष्यो निष्क्रान्तः । (५२)

राजा ॥ सूत चोदयाश्वान् पुण्याश्रमदर्शनेनात्मानं पुनीमहे । (५३)

सूतः ॥ यदाज्ञापयत्यायुष्मान् ॥ इति भूयो रथवेगं रूपयति (५४)

---

गता विद्या यासां तास्तथोक्ताः सर्व्वा धर्म्मादिमयेताः क्रियाविहितकर्म्माणि समवलोक्य सम्यग् दृष्ट्वा मौर्व्वी गुणस्य यः किण्वस्तद्दोषासत्वनिरस्तुष्णमणः । घांटः इति यस्य प्रसिद्धिः । सोऽङ्कचिह्नं यत्र स तथाभूतो मे भूयो बाहुः त्रियद् रचति इति ज्ञास्यसि अनुभविष्यसि । किणः शुष्कव्रणेऽपि चेति त्रिकाण्डशेषः । इत्यमार्य्या । अत्र द्वितीयचतुर्थपादान्तगयोर्घ्नगोरपि नपूर्णे गुं बल्लमङ्गीकर्त्तव्यम् । तदाह । सानुस्वारश्च दीर्घो च विसर्गी च गुरुर्भवेत् । वर्णः संयोगपूर्व्वश्च लघुः पादान्तगोऽपि वेति ॥

(४९) राजेति । अपि प्रश्ने । महर्षिसहस्त्रमन्नपानाद्यध्यापयन्नसमीपमदः । कुलपतिः कण्वः । सन्निहितोऽवस्थितः । कुलपतिलक्षणं यथा । "मुनीनां दशसाहस्रं योऽन्नदानादिपोषणात् । अध्यापयति विप्रर्षिः स वै कुलपतिः स्मृत इति ॥

(५०) वैखेति । दुहितरं शकुन्तलामतिथिसत्काराय अतिथिसपर्य्यायै आदिश्य अस्या दुहितुः प्रतिकूलमनिष्टकृद् दैवं पौर्व्वदेहिककर्म्मदोषं । तथाचोक्तम् । तत्र दैवमभिव्यक्तं पौरुषं पौर्व्वदेहिकमिति । शमयितुं स्वस्त्ययनादिभि विहन्तुं इदानीमेव सोमतीर्थं गतः । मत्स्यपुराणम् । प्रतिकूलं यदा दैवं पौरुषं च विहन्यते । मङ्गलाचारयुक्तानां नित्यमुत्थानशीलिनामिति ॥

(५१) राजेति । भवतु तदिति शेषः । तां शकुन्तलां । सैव शकुन्तलैव । विदितभक्तिरवगतभक्तिं मंमेति शेषः । महर्षये कण्वाय । अत्र भक्तिशब्दस्य भावप्रत्ययान्तत्वात् तस्मिन् परे विदितशब्दस्य पुंवद्भावः सुघटः । कर्म्मव्युत्पन्नभक्तिशब्दविशेषणस्यैव तद्विधानात् ॥

(५२) वैखेति । साधयामो गच्छामः । प्रायेण स्यान्तकः साधि गमेः स्थाने प्रयुज्यत इति दर्शनात् ॥

(५३) राजेति । चोदय प्रेरय । पुनीमहे पवित्रीकुर्म्मः ॥

(५४) सूत इति । भूयः पुनः । भूयश्चिन् बहुतरे पुनरर्थे स्यादोऽव्ययमिति मेदिनी ॥

राजा ॥ (समन्तादवलोक्य) ॥ सूत अकथितोऽपि ज्ञायत एवायमाभोगस्तपोवनस्य । (५५)

सूत ॥ कथमिव । (५६)

राजा ॥ किं न पश्यति भवान् । इह हि । (५७)

नीवाराः शुककोटरार्भकमुखभ्रष्टास्तरूणामधः
प्रस्निग्धाः क्वचिदिङ्गुदीफलभिदः सूच्यन्त एवोपलाः ।
विश्वासोपगमादभिन्नगतयः शब्दं सहन्ते मृगा-
स्तोयाधारपथाश्च वल्कलशिखा निष्यन्दरेखाङ्किताः (५८)

अपि च । (५९)

---

(५५) राजेति । समन्तात् सर्वतः । अकथितोऽपि केनापि तपोवनमिदमित्यनुपदिष्टोऽपि । ज्ञायतेऽनुमीयते । आभोगः परिपूर्णता । आभोगः परिपूर्णतेत्यमरः । तपसे मुनिभिराश्रितं वनं तपोवनं तस्य ॥

(५६) सूत इति । कथमिव किं रूपमिति प्रश्नः ।

(५७) राजेति । न पश्यति तपोवनधर्मानिति शेषः । हि यस्मात् इह वने एतत् एवमेवमिति श्लोकीयेनान्वयः ॥

(५८) नीवारा इति । तरूणां वृक्षाणामधः अधस्तात् नीवारास्तृणधान्यानि शुकानां पक्षिविशेषाणां ये कोटरार्भकाः कोटरस्थशावकास्तेषां मुखेभ्यो भ्रष्टा विगलिता दृश्यन्त इति शेषः । तपस्विभिरेवानायासिकतया नीवारा लभ्यन्ते । क्वचिदुपला प्रस्तरा इङ्गुद्यास्तापसतरोः फलानि भिन्दन्तीति इङ्गुदीफलभिदः सूच्यन्ते अनुमीयन्ते यत प्रस्निग्धास्तैलयुक्ताः । इङ्गुदी तापसतरुरित्युक्तेस्तपोवनानुमानम् । विश्वासोपगमात् राजन्यविश्वासस्याभावात् मृगा अभिन्ना विपर्ययमप्राप्ता यथापूर्वं निश्चला इति यावत् गतयो येषां ते तथोक्ताः सन्तः शब्दं रथध्वनिं सहन्ते असम्भ्रमं शृण्वन्ति । विश्वस्तमृगसञ्चारादपि सानुमानात् तपोवनानुमानम् । तथा तोयाधाराणां जलाशयानां पन्थानश्च वल्कलानां परिहितत्वचां शिखाभ्यश्च निष्यन्देन जलधारया रेखाङ्किताः सरेखा दृश्यन्त इति शेषः । एतेन स्नातोत्तीर्णतापसगतिर्दर्शिता । इदं शार्दूलविक्रीडितं नाम वृत्तम् । तदुक्तम् । आद्याश्चेद्गुरवस्त्रयः प्रियतमे षष्ठस्तथा चाष्टमः सन्त्येकादशतस्त्रयस्तदनु चेद्द्वादशाद्यो ततः । मार्तण्डैर्मुनिभिश्च यत्र विरतिः पूर्णेन्दुबिम्बानने तद्वृत्तं प्रवदन्ति काव्यरसिकाः शार्दूलविक्रीडितमिति ॥

(५९) मन्त्रयत्नोपपत्तिभिरित्यभिधानादन्यदपि दर्शयितुमाह अपि चेति । अन्यत्स्पष्टम् ॥

कुल्याम्भोभिः पवनचपलैः शाखिनो धौतमूला
भिन्नो रागः किशलयरुचामाज्यधूमोद्गमेन।
एते चार्वागुपवनभुवि छिन्नदर्भाङ्कुरायां
नष्टाशङ्का हरिणशिशवो मन्दमन्दं चरन्ति॥ (६०)

सूतः॥ सर्वमुपपन्नम्। (६१)

राजा॥ स्तोकमन्तरं गत्वा॥ आश्रमोपरोधो माभूत्, तदिहैव रथं स्थापय यावदवतरामि। (६२)

सूतः॥ धृताः प्रग्रहाः, अवतरत्वायुष्मान्। (६३)

राजा॥ अवतीर्य आत्मानमवलोक्य च॥ सूत! विनीतवेशेन प्रवेष्टव्यानि तपोवनानि तदिमानि तावद् गृह्यन्तामाभरणानि धनुश्च॥ इति सूतस्यार्पयति॥ (६४)

---

(६०) कुल्याम्भोभिरिति। पवनचपलैः वायुना तरङ्गितैः कुल्यानां कृत्रिमाल्पसरितामम्भोभिः सलिलैः शाखिनस्तरोरम्भोरुहा धौतमूलाः प्रक्षालितपादा भवन्तीति शेषः। कुल्याल्पा कृत्रिमा सरिदित्यमरः। तथाविधजलप्रणाल्यस्तपोवन एव जलनिर्गमाय खाताः सन्तीति भावः। तथा आज्यस्य हुतहविषो धूमोद्गमेन किशलयरुचां पल्लवप्रभाणां रागो रक्तिमा भिन्नो भेदं गतः। रागः क्लेशादिके रक्ते मात्सर्ये लोहितादिष्विति शाश्वतः। तथा एते हरिणशिशवो मृगशावकाश्च नष्टाशङ्का आजन्मापरिपीडनतया निर्भीकाः सन्तः छिन्नो खनित्रैः कृत्तो दर्भाङ्कुरः कुशाङ्कुरो यस्यां सा तथोक्तायामुपवनभुवि अर्वाग्भागे समीपे मन्दमन्दं स्वैरं स्वैरं चरन्ति। पूर्वं तु मृगाणामत्र तु मृगशिशूनां यथापूर्वं गतिरीप्सितेत्यपौनरुक्त्यम्। इदं मन्दाक्रान्ता नाम वृत्तम्। तदुक्तम्। चत्वारः प्राक् श्रुततु गुरवो द्वौ दशैकादशौ चेन्मुख्यौ वर्णौ तदनु कुसुमाभोदिनि हादशान्त्यौ। तदन्त्यान्त्यौ युगरसहयैर्यत्र कान्ते विरामो मन्दाक्रान्ता प्रवलकथयसन्धिता सङ्गिरन्ते॥

(६१) सूत इति। उपपन्नं युक्तम्॥

(६२) राजेति। स्तोकमल्पम्। स्तोकाल्पक्षुल्लकाः सूक्ष्ममित्यमरः। अन्तरं तपोवनाभ्यन्तरम्। आश्रमोपरोध आश्रमपीडा। यावदवतरामि अवतरणपर्यन्तमित्यर्थः॥

(६३) सूत इति। प्रग्रहा अश्वरज्जवः। वागडोर इति प्रसिद्धाः। तुलासूत्रेऽश्वादिरश्मौ प्रग्राहः प्रग्रहोऽपि चेत्यमरः॥

(६४) राजेति। विनीतवेशेन सभ्यवेशेन अनुद्धतवेशेनेति यावत्। प्रवेष्टव्यानि गम्यानि। आभरणानि किरीटकुण्डलादीनि। सूतस्येति सम्बन्धमात्रविवक्षायां षष्ठी॥

सूतः ॥ गच्छामि । (६५)

राजा ॥ यावदाश्रमवासिनः प्रत्यवेक्ष्य निवर्तिष्ये तावदार्द्रपृष्ठाः क्रियन्तां वाजिनः । (६६)

१ सूतः ॥ यथाज्ञापयत्यायुष्मान् ॥ इति निष्क्रान्तः । (६७)

राजा ॥ परिक्रम्यावलोक्य च ॥ इदमाश्रमपदं यावत् प्रविशामि । (६८) प्रविश्य प्रवेशकेन निमित्तं सूचयित्वा ॥ अये (६९)

१६ शान्तमिदमाश्रमपदं स्फुरति च बाहुः कुतः फलमिहास्य ।
अथवा भवितव्यानां द्वाराणि भवन्ति सर्वत्र ॥ (७०)

नेपथ्ये ॥ इदो इदो पिअसहीओ । (७१)

राजा ॥ कर्णं दत्त्वा ॥ अये दक्षिणेन वृक्षवाटिकामालाप इव श्रूयते यावदत्र गच्छामि । (७२) परिक्रम्यावलोक्य च ॥ अये एतास्तपस्विकन्यकाः

---

(६५) सूत इति । गच्छामि आभरणादीनीति शेषः ॥

(६६) राजेति । यावत् यावता कालेन । प्रत्यवेक्ष्य तत्तावधारणेनावलोक्य । निवर्तिष्ये प्रत्यागमिष्यामि । तावत् तं कालं व्याप्य । आर्द्रपृष्ठा आर्द्राणि पृष्ठस्वकस्थ धारणेनोष्मापगमात् शीतलानि पृष्ठानि येषां ते तथोक्ताः ॥

(६७) सूत इति । सुगमम् ॥

(६८) राजेति । परिक्रम्य इतस्ततः सञ्चर्य । आश्रमपदं आश्रमस्थानम् । पद व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुष्वित्यमरः । यावत् तदा ॥

(६९) प्रविश्येति । प्रवेशकेन बाहुना । भुजबाहू प्रवेष्टो दोरित्यमरः । निमित्तं शुभलक्षणं स्पन्दनमिति यावत् । निमित्तं हेतुलक्ष्मणोरित्यमरः । सूचयित्वा ज्ञापयित्वा । अये इति सम्भ्रमे । अये क्रोधे विषादे च सम्भ्रमे स्मरणेऽपि चेति मेदिनी ॥

(७०) शान्तमिति । इदमाश्रमपदमाश्रमस्थानं शान्तं शान्तिरसास्पदं न स्त्रादिरसाश्रितमिति भावः । बाहुर्दक्षिणो भुजश्च स्फुरति स्पन्दते इह आश्रमे कुतो हेतोरस्य दक्षिणबाहुस्फुरणस्य फलं स्त्रीलाभरूपं स्यात् । तथाचोक्तमद्भुतसागरे । वामेतरभुजस्पन्दो वरस्त्रीलाभसूचक इति । सम्भावनामपि दर्शयति अथवेति । भवितव्यानामवश्यम्भाविनामर्थानां सर्वत्र द्वाराणि आपतनोपाया भवन्ति सन्ति । भवतिरत्रास्तिसमानार्थो न लाक्षणिकः । इयमार्या जातिः ॥

(७१) नेपथ्य इति । इद इत्यादि । इत इत प्रियसख्यौ । इत इत अस्यामस्यां दिशि वीप्सया द्विर्वचनम् । आगच्छतमिति शेषः ॥

(७२) राजेति । कर्णं दत्त्वा श्रोत्रं कर्णं नियोज्य । अये इति सम्भ्रमे । दक्षिणस्यां

स्वप्रमाणानुरूपैः सेचनघटैर्बालपादपेभ्यः पयो दातुमित एवाभिवर्तन्ते । (७३) निरूप्य ॥ अहो मधुरमासां दर्शनम् । (७४)

शुद्धान्तदुर्लभमिदं वपुराश्रमवासिनो यदि जनस्य ।
दूरीकृताः खलु गुणैरुद्यानलता वनलताभिः ॥ (७५)

यावदेतां छायामिमामाश्रित्य प्रतिपालयामि ॥ इति विलोकयन् स्थितः । (७६)

॥ ततः प्रविशति यथोक्तव्यापारा सह सखीभ्यां शकुन्तला ॥ (७७)

सखी ॥ हला सउन्तले तत्तो वि तादकस्सवस्स अस्समरुक्खआ पिअदरा त्ति तक्केमि, जेण णोमालिआ-कुसुम-परिपेलवा वि तुमं एदाणं आलवालपरिऊरणे णिउत्ता । (७८)

---

दिशीति दक्षिणेन । वेनोऽपीति दक्षिणशब्दात् सप्तम्या एन । प्रमदवाटिकामुपवनम् । भिक्षवमेत्येनप्रत्ययान्तेन द्वितीया । अमात्यगणिकादीनां उपवने प्रमदवाटिका इत्यमरोक्तस्युपवनमथ । आलाप आभाषणम् । स्यादाभाषणमालाप इत्यमरः । यावदवधारणे । यावत् तावच्च साकल्येऽवधौ मानेऽवधारणे इत्यमरः । अत्र प्रमदवाटिका दक्षिणेन ॥

(७२) परिक्रम्येति । परिक्रम्य सञ्चर्य । इयं बोपलभ्यताम् आदये इति । स्वप्रमाणस्य स्वाकृतेर्नामुत्साहभावस्य अनुरूपैः योग्यैः इत्यालुरिति यावत् सेचनघटैः स्वसेकार्थं कलशैः । बालपादपेभ्यः अनुन्नतवृक्षेभ्यः । इतोऽत्र । अभिवर्तन्ते आयान्ति ॥

(७४) निरूप्येति । निरूप्य सविशेषावलोकनात् विचार्य । अहो विस्मये । अहो ही च विस्मये इत्यमरः । आसां कन्यकानां दर्शनं मधुरं प्रियम् । रसवत्स्वादुप्रियेषु मधुरोऽन्यवदिति विश्वः ॥

(७५) शुद्धान्तेति । आश्रमवासिनो वनवासिनो जनस्य इदं वपु शरीरं यदि शुद्धान्तेषु अन्तःपुरेषु दुर्लभं दुर्लभोपमम् । अदृष्टपूर्वत्वादीदृग्रूपस्येति भावः । अन्तःपुरागारं भूभुजामन्तःपुरं स्यादवरोधनम् । शुद्धान्तश्चावरोधश्चेत्यमरः । तदा खलु अस्मिन्नेव उद्यानस्य उपवनस्य लता [illegible] इति भावः । पुमानाक्रीड उद्यानं राज्ञः साधारणं वनमित्यमरः । वनलताभिररण्यभूजाभिः गुणैः सौन्दर्यादिभिः दूरीकृताः पराजिताः । अत्र निदर्शनालङ्कारः । लक्षणन्तु वक्ष्यते । इयमार्या ॥

(७६) यावदिति । एतामुपस्थितकन्यका । प्रतिपालयामि प्रतीक्षे ॥

(७७) तत इति । ततस्तस्मात् परम् । यथोक्तव्यापारा सेचनघटं वहन्ती ॥

(७८) सखीति । सखी शकुन्तलासख्योरिति शेषः । हलेत्यादि । अयि शकुन्तले

शकु॥ हला अणसूए ण केवलं तादस्स णिओओ ममावि एदेसु सहोअरसिणेहो॥ इति हस्तसेचनं नाटयति। (७९)

द्वितीया॥ सहि सउन्तले उदअं लम्भिदा एदे गिम्हआलकुसुमदाइणो अस्समरुक्खआ। दाणिं अदिक्कन्तकुसुमसमए वि रुक्खके सिञ्चह्म, तेन अणहिसन्धिगुरुओ धम्मो भविस्सदि। (८०)

शकु॥ हला पिअम्वदे रमणिज्जं मन्तेसि॥ इति भूयो हस्तसेचनं नाटयति। (८१)

राजा॥ निर्वर्ण्य आत्मगतम्॥ कथमियं सा कण्वदुहिता शकुन्तला। (८२)

---

त्वत्तोऽपि तातकण्वस्य आश्रमवृक्षाः प्रियतरा इति तर्कयामि येन नवमालिकाकुसुमपरिपेलवापि त्वम् एतेषामालवालपरिपूरणे नियुक्ता। त्वत्त इति युष्मच्छब्दात पञ्चम्यास्तस्। एकत्वान्न मपर्यन्तस्य त्वदादेश। तामपेक्ष्येत्यर्थः। येन तातकण्वेन। नवेति। नवमालिकाया नवमल्लिकायाः कुसुमवत्परिपेलवापि सुकुमारापि। पेलवं कोमलमिति त्रिकाण्डशेषः। एतेषां पादपानाम्। आलवालानां मूलगतपरिखाणाम्। परिपूरणे तोयैरिति शेषः। कण्डे इत्यत्र कण्डाह्वान नीच चेटी सखी प्रतीति नाट्योक्तावमर॥

(७९) शकु इति। हलेत्यादि अयि अनसूये न केवलं तातस्य नियोगो ममाप्येतेषु सहोदरस्नेह। नियोग आदेश सेकप्रवर्त्तक इति शेष। एतेषु पादपेषु मम एकतपोवनगर्भसम्भूततया सहोदरवत् स्नेहोऽपि सेकप्रवर्त्तक। नाटयति नाट्येन दर्शयति॥

(८०) द्वितीयेति। द्वितीया सखीत्यर्थः। सहीत्यादि। सखि शकुन्तले उदकं लम्भिता एते ग्रीष्मकालकुसुमदायिन आश्रमवृक्षा इदानीमतिक्रान्तकुसुमसमयानपि वृक्षान् सिञ्चामस्तेन अनभिसन्धिगुरुको धर्मो भविष्यति। लम्भिता प्रापिता। अतीति। अतिक्रान्तोऽतिवाहित कुसुमानां पुष्पाणां समयो येषान्। तेन सेकेन। अनभिसन्धिगुरुक अनभिसन्धिना प्रयोजनोद्देशाभावेन गुरु महान्। गुरु महति भाव्यर्थेदिति विश्व। धर्म श्रेय। यदाह हारीत। यत्तु सोपध ददाति अन्यन्न्यायितमल्पफलमिति। सोपध प्रतिलाभेच्छया कृतम्। तथाच नारद। पात्रेभ्यो दीयते नित्यमनपेक्ष्य प्रयोजनम्। केवलं धर्मबुद्ध्या [illegible] धर्मदानं तदुच्यत इति॥

(८१) शकु इति। हलेत्यादि। अयि प्रियंवदे रमणीयं मन्त्रयसे। रमणीयमिति क्रियाविशेषणं। मन्त्रयसे कार्यमवधारयसि। भूय पुन॥

(८२) राजेति। निर्वर्ण्य निरीक्ष्य। निर्वर्णनन्तु निध्यानं दर्शनालोकनेक्षणमित्यमर। आत्मगतमनतिव्यक्तम्। सा तापसाश्रमनिहितम॥

अन ॥ शिथिलयति । (८७)

प्रिय ॥ सहास ॥ एत्थ दाव पओहरवित्थारइत्तुअं अत्तणो जोव्वणारम्भं उवालह्म । (८८)

राजा ॥ सम्यगियमाह । (८९)

इदमुपहितसूक्ष्मग्रन्थिना स्कन्धदेशे
१८ स्तनयुगपरिणाहाच्छादिना वल्कलेन ।
वपुरभिनवमस्याः पुष्यति स्वां न शोभां
कुसुममिव पिनद्धं पाण्डुपत्रोदरेण ॥ (९०)

अथवा काममननुरूपमस्या वपुषो वल्कलं न पुनरलङ्कारश्रियं न पुष्यति । कुतः । (९१)

---

(८७) अनेति । सुगमम् ॥

(८८) प्रियमिति । एत्थेति । अत्र तावत् पयोधरविस्तारहेतुकमात्मनो यौवनारम्भमुपालभस्व । अत्र वल्कलस्य दृढीभावे पयोधरयोः स्तनयोः विस्तारहेतुः इति हेतुमात्मनो यौवनारम्भं यौवनोपक्रममुपालभस्व दुर्वचनीयतां प्रापय । दुर्वाद स्यादुपालम्भ इति जटाधर ॥

(८९) राजेति । सम्यक् सत्यम् । सत्ये तथ्यमृतं सम्यगित्यमरः । इयं प्रियंवदा । अभिनवयौवनैवेयमिति भाव ॥

(९०) ननु प्रियंवदावचनादिदानीमेवास्या यौवनानुभवो जायते कथं च स्तन एव प्राङ्नासीदित्यत आह इदमिति । स्कन्धदेशे उपहितो दत्त सूक्ष्मग्रन्थिर्यस्य च तेन । तथा स्तनयुगस्य य परिणाहो विशालता । परिणाहो विशालतेत्यमर । तदाच्छादिना वल्कलेन तद्विधेन सत्त्वा हेतुना अस्याः शकुन्तलायाः इदमभिनवं नवीनं वपु शरीरं पाण्डुपत्रस्य परिणतदलानां उदरेण गर्भेण पिनद्धं बद्धम् असम्यग् दृष्टमिति यावत् । कुसुमं पुष्पमिव स्वामात्मीयाम् । स्व निजात्मीय इत्यमरः । शोभां कान्तिं न पुष्यति न बिभर्ति । तथाच वल्कलाच्छन्नदेहतया न दृष्टिमात्रेणैव तारुण्यानुभवः प्रागासीत् प्रियंवदोक्तेस्तु विशेषाभिनिवेशात् सम्यगवगम्यत इति भाव । अत्रोपमालङ्कारः । यदुक्तं चन्द्रालोके । उपमा यत्र सादृश्यलक्ष्मीरुल्लसति द्वयोरिति । इदं मालिनीवृत्तम् ॥

(९१) यौवनोत्कृष्यमाणतया जनितानुराग पुन वल्कलेनैवास्या शोभा समर्थयते अथवेति । अस्याः शकुन्तलाया वपुष शरीरस्य । अननुरूपमयोग्यमपि वल्कलं पुनरल

सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशो र्लक्ष्म लक्ष्मीं तनोति ।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम् ॥ (८२)

अपिच । (८३)

कठिनमपि मृगाक्ष्या वल्कलं कान्तरूपं
न मनसि रुचिभङ्गं स्वल्पमप्यादधाति ।
विकचसरसिजायाः स्तोकनिर्मुक्तकण्ठं
निजमिव कमलिन्याः कर्कशं वृन्तजालम् ॥ (८४)

शकु ॥ (अग्रतोऽवलोक्य) ॥ सहीओ एस वादेरिदपल्लवङ्गुलीहिं किम्पि वाहरेदि विअ मं चूअरुक्खओ ता जाव णं सम्भावेमि ॥ इति तथा करोति।(९५)

प्रिय ॥ हला सउन्तले इधज्जेव्व मुहुत्तअं चिट्ठ। (९६)

शकु ॥ किं णिमित्तं। (९७)

प्रिय ॥ तए समीवट्ठिदाए लदासनाधो विअ अअं चूअरुक्खओ पडिहादि (९८)

शकु ॥ अदो क्खु तुमं पिअंवदा त्ति भणीअसि। (९९)

राजा ॥ अवितथमाह प्रियंवदा। तथा ह्यस्याः। (१००)

---

निर्मुक्तस्त्यक्तश्च योगे मुक्तकञ्चुकभोगिनीति मेदिनी। शिर्ण स्तीयम। वल्के शिल्पे शिफ लिखितममर। कर्कश कठिन इत्यजास इत्यसमूह इव। जाल समूह आनाय इत्यमर। मनसि स्वस्य किञ्चिदपि दधिभङ्गमनुरागयति नादधाति न जनयति। व्यतीमसालङ्कार ॥

(९५) शकु इति। अग्रत पुरत। स्यात् पुर पुरतोऽग्रत इत्यमर। सहीओ इत्यादि। सख्यो एष वातेरितपल्लवाङ्गुलीभि किमपि व्याहरतीव मा चूतवृक्ष। तद् याव-देन सम्भावयामि। वातेति। वातेन वायुना ईरिता कम्पिता पल्लवा एवाङ्गुलयस्ताभि। ईड् लु कम्पगत्योरिति कविकल्पद्रुम। व्याहरतीव वक्तीव। व्याहार उक्तिरित्यमर। तत् तस्मात्। यावदवधारणार्थे। सम्भावयामि बहु मन्ये। तथा करोति सम्मान करोति ॥

(९६) प्रियमिति। हलेत्यादि। अयि शकुन्तले इहैव मुहूर्तं तिष्ठ। मुहूर्तं कञ्चित् कालम ॥

(९७) शकु इति। किं णिमित्त। किं निमित्त किमर्थं तिष्ठामीत्यर्थं ॥

(९८) प्रियमिति। तए इत्यादि। त्वया समीपस्थितया लतासनाथ इव अयं चूत वृक्ष प्रतिभाति। लतासनाथो लतायुक्त। सनाथशब्दो युक्तार्थेऽन्यत्रापि श्रूयते। यथा वासवदत्तायाम। उत्फुल्लकमलसनाथमिव गगनतलं कुर्वता इति तथा नरवाहनदत्त इव प्रियङ्गुश्यामासनाथ इत्यादि। प्रतिभाति प्रकाशते ॥

(९९) शकु इति। अदो इत्यादि। अतएव प्रियंवदेति भण्यसे। भण्यसे लोकै रभिधीयसे ॥

• (१००) राजेति। अवितथ सत्यम। वितथ त्वनृत वच इत्यमर। तदेवोप

अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू ।
कुसुममिव लोभनीयं यौवनमङ्गेषु सन्नद्धम् ॥ (१०१)

अन ॥ हला सउन्तले इअं सअम्वरवहू सहआरस्स तुए किदणामहेआ, वणदोसिणी त्ति णोमालिआ णं विसुमरिदासि । (१०२)

शकु ॥ तदो अत्ताणम्पि विसुमरिस्सं । (१०३) लतामुपेत्य अवलोक्य च ॥ हला रमणीओ क्खु कालो इमस्स पादवमिहुणस्स वइअरो संवुत्तो जेण णवकुसुमजोव्वणा णोमालिआ अअं पि बद्धफलदाए उवभोअक्खमो सहआरो ॥ इति पश्यन्ती तिष्ठति । (१०४)

---

पादयितुमाह तथा प्रीति । हि यस्मात् अस्या शकुन्तलायास्तथा लताया इव । अनन्तर श्लोकीयवाक्यान्वय ॥

(१०१) अधर इति । अधरो दन्तच्छद किसलयवत् पल्लववत् रागो लौहित्यं यस्य स तथोक्त । पल्लवोऽस्त्री किसलयमित्यमर । तथा बाहू कोमलविटपयो सुकुमारशाखयो अनुकारिणौ सदृशौ । विटपो न स्त्रियां स्तम्बशाखाविस्तारपल्लवे इति मेदिनी । तथा लोभनीयं यौवनं कुसुममिवाङ्गेषु सन्नद्धं सम्बद्धम् । अत्रोपमालङ्कार । तद्गुणा इत्युक्तमा । यथाकथञ्चित् वाक्यस्य अन्योन्यं प्रतीयते । अथवा नाम चेति । आर्या जातिरियम् ॥

(१०२) अनेति । हलेत्यादि । अयि शकुन्तले इयं स्वयम्वरवधू सहकारस्य त्वया कृतनामधेया वनतोषिणीति नवमालिका एनां विस्मृतासि । सहकारस्यातिसौरभरसालस्य । रसालोऽसौ सहकारोऽतिसौरभ इत्यमर । स्वयम्वरवधू स्वयंलतामेवेषु पतीव । वधू स्नुषा नवोढा स्त्री भार्या कन्याङ्गनासु चेति विश्व । त्वया वनतोषिणीति कृत नामधेयं नाम यस्या सा इयं नवमालिका नवमल्लिका । एनां नवमालिकाम् । विस्मृतेति वाकार्थ-त्वात् वर्तमाने क्त । अत्र इष्टो देवदत्तवत् कश्चिदन्यतोऽपि वर्तते इति क्तो बाध्य । यद्वा विसुमरिदेति प्राकृतत्वात् वाक्यारम्भ यो न दोषाय अध्युनेन तु विस्मरसीति व्याख्यातव्यम् ॥

(१०३) शकु इति । तदो इत्यादि । तदात्मानमपि विस्मरिष्यामि । तदा यदि वनतोषिणीं विस्मरिष्यामीत्यर्थ ॥

(१०४) लतामिति । लता वनतोषिणीम् । उपेत्य उपगम्य । हलेत्यादि । अयि सखि रमणीय खलु कालोऽस्य पादपमिथुनस्य व्यतिकर संवृत्त । येन इयं नवकुसुमयौवना नवमालिका अयमपि बद्धफलतया उपभोगक्षम सहकार । अत्र पादपयो पादेन मूलेन पिबति रसानाकर्षतीति व्युत्पत्त्या इत्यन्तताधारणया यौषितो नरस्य योऽन्यद्द

प्रियं॥ सस्मितम्॥ अणसूए जाणासि किंणिमित्तं सउन्तला वणदोसिणीं अतिमेत्तं पेक्खदि त्ति। (१०५)

अन॥ ण क्खु विभावेमि ता कधेहि मे। (१०६)

प्रिय॥ जह वणदोसिणी अणुरूवेण पादवेण सङ्गदा तह अहम्मि अत्तणो अणुरूवं वरं लभेअं त्ति। (१०७)

शकु॥ एस दे अत्तणो चित्तगदो मणोरहो। इति कलसमावर्जयति॥(१०८)

---

त्यमर। अस्य पादपमिथुनस्य पादपयुगलस्य पादपदम्पत्योरित्यपि व्यज्यते। मिथुनं दम्पती युगे इति विश्व। रमणीयो मनोरमो रतिकरो लोकानामनुरागकर पक्षे सुरतकर काल यस्त्व सम्भूत। रति स्त्री स्मरदारेषु रागे सुरतगुह्ययोरिति मेदिनी। येन हेतुना इय नवमालिका नव कुसुम पुष्प पक्षे रजो यत्र तत् नवकुसुमम्। कुसुम पुष्पफलयो स्त्रीरजोनेत्ररोगयोरिति विश्व। नवाभूत यौवन वय स्वभावो यस्या सा तथोक्ता। तथा अय सहकारोऽपि बद्धफलतया फलपूर्णतया भोग्य तस्य फलवत्त्वसम्भवात्। पक्षे बद्धलाभतया। फल जातीफले लाभे हेतुत्वे शुद्धविलाभयोरिति मेदिनी। उपभोग क्षमो लोकोपभोगयोग्य। पक्षे योषिद् भरणक्षम। भोग सुखे स्त्र्यादिभृत्यावपेक्ष फण कायोरित्यमर। अत्र प्रस्तुते पादपयुग्मे श्लिष्टविशेषणादिभिरप्रस्तुतस्य दम्पतिभावस्य व्यवहारारोपणात् समासोक्तिरलङ्कार। यदुक्त दर्पणे। समासोक्ति समै यत्र कार्य्यलिङ्ग विशेषणै। व्यवहारसमारोप प्रस्तुतेऽन्यस्य वस्तुन इति॥

(१०५) प्रियमिति। सस्मित स्मित सहितेत्यर्थ। अणसूए इत्यादि। अनसूये जानासि किं निमित्त शकुन्तला वनतोषिणीमतिमात्र प्रेक्षत इति। अतिमात्रमत्यर्थम्। प्रेक्षते पश्यति॥

(१०६) अनेति। णेत्यादि। न खलु विभावयामि तत कथय मे। विभावयामि अनुभवामि। मे इति सम्बन्धमात्रविवक्षाया षष्ठी॥

(१०७) प्रियमिति। जहेत्यादि। यथा वनतोषिणी अनुरूपेण पादपेन सङ्गता तथाहमपि आत्मनोऽनुरूप वर लभेयेति। सङ्गता सम्बद्धा। अनुरूप रूपस्य योग्य। वर वरणीय जन। इतिनिमित्तमिति पूर्ववाक्यीयेनान्वय॥

(१०८) शकु इति। एस इत्यादि। एष ते आत्मनश्चित्तगतो मनोरथ। चित्तगतो मनोगत। मनोरथोऽभिलाष। मनोरथ कामोऽभिलाष इत्यमर। त्वमेव तथा लब्धु मिच्छसीति भाव। आवर्जयति नम्रयति। एस दे अत्तगदो मणोरहो इत्यन्यत्र पाठ। एष ते आत्मगतो मनोरथ इत्यर्थ॥

अन॥ हला सउन्तले इअं तादकण्णेण तुमं विअ सहत्थेण सम्वड्ढिदा माहवीलदा ता कधं इमं विसुमरिदासि। (१०९)

शकु॥ तदो अत्ताणम्मि विसुमरिस्सं। (११०)

लतामुपेत्यावलोक्य च सहर्षम्॥ अच्चरीअं अच्चरीअं पिअम्बदे पिअं दे णिवेदेमि। (१११)

प्रिय॥ सहि किं मे पिअं। (११२)

शकु॥ असमए क्खु एसा आमूलादो मुउलिदा माहवीलदा। (११३)

उभे॥ सत्वरमुपगम्य॥ सहि सच्चं सच्चं। (११४)

शकु॥ सच्चं किं ण पेक्खध। (११५)

प्रिय। सहर्षं निरूप्य॥ सहि तेण हि पडिप्पिअं दे णिवेदेमि। (११६)

---

(१०९) अनेति। हलेत्यादि। अयि शकुन्तले इयं तातकण्वेन त्वमिव स्वहस्तेन संवर्द्धिता माधवीलता तत् कथमिमां विस्मृतासि। त्वमिव यथा त्वं स्वहस्तेन संवर्द्धिता तथैव माधवीलतेत्यर्थः। हलेत्यादि ग्रन्थः॥

(११०) शकु इति। तदो इत्यादि। तदात्मानमपि विस्मरिष्यामि। आत्मवत् कथं मयीयं विस्मरणीयेत्याशयाभिप्रायः॥

(१११) लतामिति। अच्चरीअमित्यादि। आश्चर्यमाश्चर्यम्। प्रियंवदे प्रियं ते निवेदयामि। प्रियमाह्लादकरम्। निवेदयामि विज्ञापयामि॥

(११२) प्रियमिति। सहीत्यादि। सखि किं मे प्रियम्। सुगमम्॥

(११३) शकु इति। असमए इत्यादि। असमये खलु एषा आमूलात् मुकुलिता माधवी लता। असमये वसन्तविगमे ग्रीष्म इति यावत्। वासन्ती माधवीलतेत्यमरः। आमूलात् मूलपर्यन्तम्। आङ्मर्यादाभिविध्योरिति नियमात् तद्योगादपादानत्वेन पञ्चमी। मुकुलो जातोऽस्या इति मुकुलिता। इतोऽस्य जाते इति इतः। इदमेव प्रियमित्याशयाभिप्रायः॥

(११४) उभे इति। उपगम्य लतामिति शेषः। सहीत्यादि। सखि सत्यं सत्यम्। एतत् किं सत्यमिति भावः॥

(११५) शकु इति। सच्चमित्यादि। सत्यं किं न प्रेक्षेथे। यद्यन्यथापि कथं सत्यतां पृच्छथ इति भावः॥

(११६) प्रियमिति। निरूप्य विचार्य। सहीत्यादि। सखि तेन हि प्रतिप्रिय

शकु ॥ किं मे पडिप्पिअं । (११७)

प्रिय ॥ आसण्णपाणिग्गहणासि तुमं । (११८)

शकु ॥ सासूयमिव ॥ एस दे अत्तणो चित्तगदो मणोरहो ता ण दे वअणं सुणिस्सं । (११९)

प्रिय ॥ सहि ण क्खु परिहासेण भणामि सुदं मए तादकस्सस्स मुहादो तुह कल्लाणसूअअं एदं णिमित्तं त्ति । (१२०)

अन ॥ हला पिअंवदे अदोज्जेव सविणेहा सउन्तला माहवीलदं सिञ्चदि । (१२१)

शकु ॥ जदो वहिणी मे भोदि तदो किं त्ति ण सिञ्चेमि ॥ इति कलसमावर्जयति ॥ (१२२)

राजा ॥ अपि नाम कुलपतेरियमसवर्णक्षेत्रसम्भवा भवेत् । अथवा कृतं सन्देहेन । (१२३)

---

ते निवेदयामि । तेन हि तेनैव आकालिककुसुमोद्गमेन हेतुना । हि हेतावधारणे इत्यमरः । प्रतिप्रियमेतत्प्रतिरूपं प्रियम् ॥

(११७) शकु इति । किमित्यादि । किं मे प्रतिप्रियम् । सुगमम् ॥

(११८) प्रियमिति । आसन्नेत्यादि । आसन्नपाणिग्रहणासि त्वम् । आसन्नं निकटमचिरभावीति यावत् पाणिग्रहणं विवाहो यस्याः सासि त्वम् ॥

(११९) शकु इति । सासूयमिव प्रियंवदायां दोषारोपणेन सहेव । एस इत्यादि । एष ते आत्मनश्चित्तगतो मनोरथः तन्न ते वचनं श्रोष्यामि । सुगमम् ॥

(१२०) प्रियमिति । सखीत्यादि । सखि न खलु परिहासेन भणामि श्रुतं मया तातकण्वस्य मुखात् तव कल्याणसूचकमिदं निमित्तमिति । परिहासेन नर्मवाक्येन । मुखादिति निःसृतमिति शेषः । घनाद्विद्योतते विद्युदितिवत् । कल्याणसूचकं कल्याणस्य मङ्गलस्य परिणयस्येति यावत् सूचकमनुमापकम् । इदं निमित्तं माधव्या अकालकुसुमम् । इति श्रुतमित्यनेनान्वितम् ॥

(१२१) अन इति । हलेत्यादि । अयि प्रियंवदे अतएव सस्नेहा शकुन्तला माधवीलतां सिञ्चति । अतएव अस्या मङ्गलसूचकत्वादेव । सस्नेहा सप्रणया सतीत्यर्थः ॥

(१२२) शकु इति । जदो इत्यादि । यतो भगिनी मे भवति ततः किमिति न सिञ्चामि । भगिनी एकजातीयत्वात् वर्द्धितत्वादिति भावः । किमिति किन्निमित्तम् ॥

(१२३) राजेति । अपि प्रश्ने । नाम सम्भावनायाम् । नाम प्राकाश्यसम्भाव्य

असंशयं क्षत्रपरिग्रहक्षमा यदार्यमस्यामभिलाषि मे मनः ।
सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः ॥ (१२४)

तथापि तत्त्वत एवैनामुपलप्स्ये । (१२५)

शकु॥ ससम्भ्रमम्॥ अम्मो सलिलसेअसम्भमुग्गदो णोमालिअं उज्झिअ वअणं मे महुअरो अहिवट्टदि ॥ इति भ्रमरबाधां नाटयति । (१२६)*

---

कौथोपगमकुत्सने इत्यमरः । कुलपतेः कण्वस्य । इयं शकुन्तला । असवर्णा विप्रजाती तरत् यत् येन पत्नी तत्सम्भवा तद्गुणं संयुक्ता । येन पत्नी शरीरयोरित्यमरः । अत्रायमाशयः । तदानीमासीत् विप्राणां चातुर्वर्ण्यं परिणयाधिकारः । राजन्यानान्तु शूद्रान्तवर्णे क्षत्रियोपयमे । यदाह मनुः । शूद्रैव भार्या शूद्रस्य सा च स्वा च विशः स्मृते । ते च स्वा चैव राज्ञस्तु ताश्च स्वा चाग्रजन्मन इति । तथाचास्याः सवर्णासम्भवत्वे आशङ्का ब्राह्मणीत्वेन परिणयपरीहारः स्यात् क्षत्रियादिसम्भवत्वे तु पुनः येऽनन्तरस्त्रीषु क्रमेणोक्ता हि जन्मनाम । तानन्तरनाम्नस्तु मातृदोषात् प्रचक्षते इति मनुवचनान्तरात् जाता क्षत्रियादित्वेन निष्प्रत्यूहः स्यादस्याः परिणय इति । अथवा तदेव निश्चिनोति असंशयेति । अनसत्यम् । स्तन युगेऽसमर्थे चेति मेदिनी ॥

(१२४) असंशयमिति । अथ ध्रुवं निश्चितं क्षत्रस्य क्षत्रियस्य परिग्रहक्षमा स्वीकारार्हा पूर्व्ववाक्यस्थेन इयमितानेनान्वयः । द्विजाविप्रौ नृप क्षत्र क्षत्रिय इति त्रिकाण्डशेषः । हेतुमाह यत् यस्मात् आर्य्यं समागम्यविपर्क्षितपूर्व्वत्वेनातिमहत् मे मम अस्यां कन्यकायामभिलाषि सस्पृहम् अत इत्यर्थः । ननु सन्देहे निर्णायकत्वं समर्थयति सतामित्यादि । हि यस्मात् सन्देहपदेषु संशयास्पदेषु वस्तुषु पदार्थेषु सतां सततमेवधाचारिणामन्तःकरणस्य मनसः प्रवृत्तयो गतयः प्रमाणं निश्चायिकाः । चित्तं मनोबुद्धिरहङ्कारश्चित्तं करणमान्तरमिति । प्रमाणं नित्यमर्य्यादायामोऽपेषु सत्यवादिनि । इयत्तायाञ्च हेतौ च स्त्रीरैकत्वे प्रमातरीति मेदिनी । अत्र सामान्येन विशेषसमर्थनादर्थान्तरन्यासोऽलङ्कारः । इदं च वंशस्थविलं नाम वृत्तम् ॥

(१२५) तथेति । तथापि अनुमानसिद्धत्वेऽपि । तत्त्वतो यथार्थेन । उपलप्स्ये ज्ञास्यामि ॥

(१२६) शकु इति । ससम्भ्रममात्मव्यग्रभावम् । अम्मो इत्यादि । अम्मो सलिलसेकसम्भ्रमोद्गतो नवमालिकामुज्झित्वा वदनं मे मधुकरोऽभिवर्त्तते । अम्मो इति विस्मये । विस्मये तु मते अम्मो निन्दा स्त्रीभिः प्रयुज्यत इति भरतः । सलिलसेकेन जलसेकेन यः सम्भ्रमस्त्वरा । सम्भ्रमस्त्वरेत्यमरः । तेनोद्गतो भ्रमरो नवमालिकामुज्झित्वा त्यक्त्वा मे मम वदनं अभि

राजा॥ सस्पृहं विलोक्य॥ साधु बाधनमपि रमणीयमस्याः।(१२७)
यतो यतः षट्चरणोऽभिवर्त्तते ततस्ततः प्रेरितवामलोचना।
विवर्त्तितभ्रूरियमद्य शिक्षते भयादकामापि हि दृष्टिविभ्रमम्॥ (१२८)
अपिच॥ साभ्यसूयमिव। (१२९)

चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं
रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः।
करं व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरं
वयं तत्त्वान्वेषान्मधुकर हतास्त्वं खलु कृती॥ (१३०)

---

अन्यत्र वर्त्तते। भिन्नकर्मयेतद्वाहिना चिह्नार्थे नाभिना द्वितीया। यथोक्तं मोघे त्वभाव-विकल्पेऽभिन्ने भागे परिमते। अतुल्ये च सदार्थे च हीनेऽल्पे मतावितीति। भ्रमरबाधा भ्रमरजनितदुःखम्। पीडा बाधा व्यथा दुःखमित्यमरः॥

(१२७) राजेति। सस्पृहं साकाङ्क्षम्। साधु प्रकटम्। अस्याः शकुन्तलाया बाधनं भ्रमरपीडनमपि रमणीयं मनोज्ञम्॥

(१२८) पूर्वोक्तमुपपादयितुं श्लोकेन हेतुमाह यत इति। हि यस्मात् यतो यतो यस्यां यस्यां दिशि षट्चरणः षट्पदः अभिवर्त्तते गच्छति ततस्ततस्तस्यां तस्यां दिशि प्रेरिते भ्रमिते वामे मञ्जुले नयने यया सा तथोक्ता। वामौ वल्गुप्रतीपयोरित्यमरः। तथा विवर्त्तिते आवर्त्तिते भ्रुवौ यया सा तथोक्ता इयं शकुन्तला अकामा अभिलाषशून्यापि भयात् दृष्टिविभ्रमं दृष्टेर्विकारं यद्वा दृष्टौ चित्तचलनमस्यास्ति शिक्षते अभ्यस्यतीव। चित्तचलनवशात् शृङ्गारात् विभ्रमो भवेदिति। अत्रोत्प्रेक्षाव्यञ्जकेवादिशब्दविरहात् प्रतीयमानोत्प्रेक्षा। यदुक्तं दर्पणे। भवेत् सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मना। वाच्या प्रतीयमाना सा प्रथमं द्विविधा मता। वाच्येवादिप्रयोगे स्यादप्रयोगे परा पुनरिति। इदं च वंशस्थविलं नाम वृत्तम्॥

(१२९) अपिचेति। अपरञ्चेत्यर्थः। साभ्यसूयम् असूयया सहितमिव॥

(१३०) चलेति। हे मधुकर करं पाणिं व्याधुन्वत्याः चालयन्त्याः शकुन्तलाया वेपथुमतीं सकम्पां तथा चलो लोलो अपाङ्गो नेत्रान्तभागो यस्याः सा ताम्। अपाङ्गौ नेत्रयोरन्तावित्यमरः। दृष्टिं दृशं बहुशो वारं वारं स्पृशसि। तथा रहसि भवं रहस्यं गोप्यमाचष्टे इति रहस्याख्यायी स इव कर्णान्तिकचरः कर्णाभ्यर्णगतः सन् मृदु अनुच्चैर्यथा स्यात् तथा स्वनसि गुञ्जायसे। तथा रते सुरतस्य व्यक्ते सर्वस्वं समस्तसम्पत्तिमिव तदर

अपि च। (१३१)

लोलां दृष्टिमितस्ततो वितनुते सभ्रूलताविभ्रमा-
माभुग्नेन विवर्त्तिता वलिमता मध्येन कम्बस्तनी।
हस्ताग्रं विधुनोति पल्लवनिभं शीत्कारभिन्नाधरा
जातेयं भ्रमराभिलङ्घनभिया वाद्यैर्विना नर्त्तकी॥ (१३२)

शकु। हला परित्ताअध परित्ताअध मं इमिणा दुट्ठमहुअरेण अहिहूअमाणं। (१३३)

उभे। सस्मितम्। का अह्मो परित्ताणे एत्थ दाव दुस्सन्तं अक्कन्द जदो राअरक्खिदाइं तवोवणाइं। (१३४)

---

तद्राज्यत्वेनाभियाज्यमीयमिति यावत्। अधरं पिबसि। मत्स्यश्च वयमत्राभि परिच्छेदा न वेत्त्रतद्याथार्थ्य त्वमन्वेषात मार्गं यात वयं हता मनोज्ञता विफलप्रयत्ना जाता इति यावत्। मनोज्ञत्व प्रतिज्ञत प्रतिबद्धो इत्यत्र य इत्यप्रचार इति केचित्, तट्टीकाकाराः। त्वं खलु त्वमेव कृती निपुण। अविशेषपदत्वात् इति वक्तव्यात्, वयमितीतरत्वेपि मङ्ग-पदनम्। इदं शिखरिणी नाम वृत्तम्॥

(१३१) अपीति। अपि च अन्यच्चाश्चर्यम्॥

(१३२) लोलामिति। कम्बौ कान्तौ स्तनौ यया सा कम्बस्तनी शकुन्तला। कि सदीमिति कर्मे कर्त्तरि र। भ्रूलताया विभ्रमेण कौटिल्येन सहिता लोला चञ्चला दृष्टिमितस्तत आशासु पार्श्वेषु वितनुते विस्तारयति। आ ईषद् भुग्नेन कौटिल्येन वलिमता वलित्रययुक्तेन मध्येन मध्यावयवेन विवर्त्तिता भ्रमिता तथा शीत्कारेण शीदिति शब्देन भिन्नो विश्लिष्टो अधरो यस्याः सा तथोक्ता च सती पल्लवनिभं पल्लवोपमम्। उत्प्रेक्षा पदे त्वमी निभसङ्काशनीकाशप्रतिकाशोपमादय इत्यमरः। हस्ताग्रं पाणिं विधुनोति कम्पयति। अत इयं भ्रमरेणाभिलङ्घनादभिभवाद् भिया भयेन वाद्यैर्विना नर्त्तकी नाट्यकारी जाता च इता। यतो शिक्षिता एव नाट्यधर्मा इत्यस्मै न सन्ति परं वाद्यानीति भावः। अत्र नर्त्तकीधर्म्माणामुपादानात् तुल्ययोगितालङ्कारः। यदुक्तं चन्द्रालोके। वर्ण्या-नामितरेषां वा धर्म्मैक्यं तुल्ययोगितेति। इदं शार्दूलविक्रीडितं नाम वृत्तम्॥

(१३३) शकु इति। हलेत्यादि। अयि परित्रायेथां परित्रायेथां मां अनेन दुष्टमधु-करेणाभिभूयमानाम्। परित्रायेथां द्विरुक्तिः सम्भ्रमे। अभिभूयमानामाकुलीक्रियमाणाम्॥

(१३४) उभे इति। केत्यादि। का वयं परित्राणे अत्र तावत् दुष्मन्तमाक्रन्द

दौवा॥ तह॥ इति निष्क्रम्य सेनापतिना सह प्रविश्य॥ एदु एदु अज्जो, एस आणावदिण्णक्खो भट्टा इध ज्जेव चिट्ठदि उवसप्पदु णं अज्जो। (३२)

सेना॥ राजानमवलोक्य स्वगतम्॥ दृष्टदोषापि मृगया स्वामिनि केवलं गुणायैव संवृत्ता। तथाहि देवः। (३३)

अनवरतधनुर्ज्यास्फालनक्रूरकर्मा
रविकिरणसहिष्णुः स्वेदलेशैरभिन्नः।
अपचितमपि गात्रं व्यायतत्वादलक्ष्यं
गिरिचर इव नागः प्राणसारं बिभर्त्ति॥ (३४)

उपगम्य॥ जयति जयति स्वामी। स्वामिन् गृहीतश्वापदप्रचारं सुचिराश्वापदमरण्यं तत् किमन्यदनुष्ठीयताम्। (३५)

राजा ॥ भद्रसेन ! भग्नोत्साहः कृतोऽस्मि मृगयापवादिना माधव्येन। (३६)

सेना॥ जनान्तिकम्॥ सखे माधव्य स्थिरप्रतिज्ञो भव अहं तावत् स्वामिनश्चित्तमनुवर्तिष्ये। (३७)

प्रकाशम्॥ देव प्रलपत्येष वैधेयः ननु प्रभुरेव निदर्शनम्। पश्यतु देवः। (३८)

मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपुः
सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः।
उत्कर्षः स च धन्विनां यदिषवः सिध्यन्ति लक्ष्ये चले
मिथ्या हि व्यसनं वदन्ति मृगयामीदृग् विनोदः कुतः॥(३९)

---

भाविता आपद्दा हि स्वजनतो येन तत् मयोक्तम्। भवतीति शेषः। तत् तस्मात् अन्यत मृगयाप्रस्थानेतरत् किमनुष्ठीयता क्रियताम्। प्रश्ने को। अस्माभिरिति शेषः॥

(३६) राजेति। भद्रसेनेति नाम। मृगयापवादिना मृगयानिन्दकेन। अवर्णाक्षेपनिर्वादपरीवादापवादवत्। उपक्रोशो जुगुप्सा च कुत्सा निन्दा च गर्हणे इत्यमरः। माधव्येन तन्नाम्ना प्रियवयस्येन॥

(३७) सेनेति। जनान्तिकं राज्ञोऽप्रकाशम्। स्थिरप्रतिज्ञो मृगयानिषेधे दृढाध्यवसायः। अनुवर्तिष्ये अनुसरिष्यामि। चित्तमस्य कीदृगित्यनुभविष्यामीति भावः॥

(३८) प्रकाशमिति। राज्ञ इति शेषः। प्रलपति अनर्थकं वक्ति। प्रलापोऽनर्थकं वच इत्यमरः। वैधेयो मूर्खः। अज्ञे मूढयथाजातमूर्खवैधेयबालिशा इत्यमरः। प्रभुः भवान्। निदर्शनं दृष्टान्तः॥

(३९) मेद इति। [illegible] शरीरं मेदसो देहस्थौल्यकरधातुविशेषस्य छेदेन अपकर्षेनेन अपगमेनेति यावत्। कृशं क्षीणमुदरं यस्य तत्। तदुक्तं भावप्रकाशे। अव्यायामदिवास्वप्नश्लेष्माहारसेविनः। मधुरोऽन्नरसः प्रायः स्नेहान्मेदो विवर्धयेदिति। अन्यच्च तत्रैव। मेदो हि सर्वं जन्तूनामुदरेष्वस्थिषु स्थितम्। अतएवोदरे वृद्धिः प्रायो मेदस्विनो भवेदिति। अतएव लघु विगतभारं सत् उत्थानयोग्यं भवति। एतेनाहवेषु निरलसभावसम्भावना दर्शिता। अपि एवं सत्त्वानां जन्तूनां भयक्रोधयोः भये क्रोधे च विकृतिमत् प्राप्तविकारं चित्तं लक्ष्यते अनुभूयते। एतेन युध्यमानस्य रिपोर्विकारदृष्ट्या भीतिः क्रोधो वेति निश्चयज्ञता दर्शिता। एवं चले जङ्गमे लक्ष्ये शरव्ये इषवो बाणाः यत् सिध्यन्ति सफला भवन्ति धन्विनां धनुष्मताम्। धन्वी धनुष्मान् धानुष्क इत्यमरः। स च उत्कर्षो

विदू॥ सरोषम्॥ अवेहि रे उच्छाअहेतुअ। अत्तभवं पइदिं आवण्णो, तुमं दाव दासीए पुत्तो अडइदो अडइं आहिण्डन्तो जाव सिआलमिअलोलुवस्स कस्स वि जिण्णरिच्छस्स मुहे णिवडिदो होहि। (४०)

राजा॥ सेनापते आश्रमसन्निकर्षे स्थितोऽस्मीति वचनं ते नाभिनन्दामि। अद्य तावत्। (४१)

गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु।
विस्रब्धैः क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले
विश्रामं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः॥ (४२)

---

मैथुनम्। एतेन मरविकमकोंऽश दर्शितम्। अतो मिथ्या हि वितथमेव मृगया व्यसनमिति वदन्ति अन्यादृश इति शेषः। कुतः अस्मादृशा व्यायामादीहग विनोदस्तमानन्द न कुतोऽपीत्यर्थः। किरणधारणे। किं चैतावदधारणे कथमत्र। व्यसनाश्याह मदु। कामजेषु मसक्तो हि व्यसनेषु महीपतिः। वियुज्यतेऽर्थधर्माभ्यां क्रोधजेष्वात्मनैव तु। मृगयाक्षो दिवास्वप्नः परीवादः स्त्रियो मदः। तौर्यत्रिकं वृथाट्या च कामजो दशको गणः। पैशुन्यं साहसं द्रोह ईर्ष्यासूयार्थदूषणम्। वाग्दण्डजञ्च पारुष्यं क्रोधजोऽपि गणोऽष्टक इति। इत्यादि शार्दूलविक्रीडितं नाम॥

(४०) विदू इति। अवेहीत्यादि। अपेहि रे उत्साहहेतुक। अत्रभवान् प्रकृतिमापन्नः, त्वं तावद्दास्याः पुत्र अटवीतोऽटवीमाहिण्डमानो यावत् शृगालमृगलोलुपस्य कस्यापि जीर्णऋक्षस्य मुखे निपतितो भव। अपेहि अपगच्छ। प्रकृति स्वभाव। प्रकृतिमापन्नः स्वाभाविकस्वभावयोरिति मेदिनी। दास्याः पुत्रो नीच आहिण्डमान परिभ्रमन्। जीर्णऋक्षस्य भल्लूकस्य। अथवा स्थविरो वृद्धो जीनो जीर्णो जरन्नपि च। ऋक्षाच्छभल्लभालूका इति चामरः। शिवायोऽपत्यात् प्रत्यापिपासी अमृत्येति कश्चित् पाठ। परमार्थतस्तात्पर्यार्थः। अया हि मादृशादौ मरणशालिनापि किन्नं भवति इति हि॥

(४१) राजेति। नाभिनन्दामि न साधु मन्ये॥

(४२) गाहन्तामिति। महिषा मृहुः शृङ्गैस्ताडितमाहतं निपानस्य जलाशयस्य सलिलं गाहन्ताम् विलोडयन्तु। मृगकुलं हरिणगणश्छायायामागत्य बद्धं मिलितं कदम्बकं समूहो येन तत् तादृशं सत्। रोमन्थं निगीर्णस्य चर्वणमभ्यस्यतु। रोमन्थस्तु चर्वितचर्वणमिति शब्दार्णवः। तथा वराहाणां शूक

सेना॥ यथा प्रभविष्णवे रोचते। (४३)

राजा॥ तेन हि निवर्त्तय पुरोगतान् धनुर्ग्राहिणः यथा च मे सैनिकास्तपोवनं नाभिरुन्धन्ति दूरात् परिहरन्ति च तथा निषेद्धव्याः। पश्य। (४४)

शमप्रधानेषु तपोवनेषु गूढं हि दाहात्मकमस्ति तेजः।
स्पर्शानुकूला अपि सूर्यकान्तास्ते ह्यन्यतेजोऽभिभवाद्वमन्ति॥(४५)

सेना॥ यथाज्ञापयति स्वामी। (४६)

विदू॥ भो उच्छाहहेदुअ णिक्कम णिक्कम। (४७)

सेनापति र्निष्क्रान्तः। (४८)

---

रात्र्यां पतितैर्यूथनाथैर्विश्वस्तैराक्रमणाशङ्काद् विश्वासवद्भिः सद्भिः। वसौ विस्रम्भ-विश्वासावित्यमरः। पल्वले अल्पसरसि। पल्वलमल्पसरः इत्यमरः। वराहाणां ततिः श्रेयः क्रियताम्। तथा इदमस्मद्धनुश्च शिथिल. एकस्याः कोटेरवसक्तो ज्याबन्धो मौर्व्या बन्धो यस्य तत् तथाभूतं सत् विश्रामं लभताम्॥

(४३) सेनेति। यथा यत्प्रकारः। प्रभविष्णवे प्रभवे भवते इति यावत्। रोचते प्रीतिं जनयति। तथैव भवत्विति शेषः॥

(४४) राजेति। नाभिरुन्धन्ति नाक्रामन्ति। परिहरन्ति त्यजन्ति। पेशलत्वं दर्शयति पश्येति॥

(४५) शमेति। शमः शान्तिरेव प्रधानं येषु तेषु तपोवनेषु तपश्चर्य्यारण्येषु, गूढ-मलक्ष्यमाणं दाहो भस्मीकरणं आत्मा स्वभावो यस्य तत् तथोक्तम्। आत्मा यत्नो धृति र्बुद्धिः स्वभावो ब्रह्म वर्ष्म चेत्यमरः। तेजोऽस्ति। तथाहि सूर्य्यकान्ताः सूर्य्यरश्मिसम्पर्केणा-नलोद्गारिणो मणिविशेषाः स्पर्शानुकूला स्पर्शे अनुकूलाः सुखयितारः तेऽपि अन्येन तेजसा अभिभवादाक्रमणात् दहन्ति दाहं जनयन्ति। अत्र दृष्टान्तोऽलङ्कारः। वृत्तमिदमुपजाति-र्नाम। यदुक्तम्। यत्र द्वयोरप्यनयोस्तु पादा भवन्ति सीमन्तिनि चन्द्रकान्ते। विद्वद्भिराद्यैः परिकीर्त्तिता सा प्रयुज्यतामित्युपजातिरेषेति। अनयोरिन्द्रवज्रोपेन्द्रवज्रयोः। उपेन्द्रवज्रा वक्ष्यते, सा चाद्युरुपादादिवर्णैरिन्द्रवज्रोच्यते॥

(४६) सेनेति। सुगमम्॥

(४७) विदू इति। भो इत्यादि। भो उत्साहहेतुक निष्क्राम निष्क्राम। सुगमम्॥

(४८) सेनेति। सुगमम्॥

न च परिहार्य्ये वस्तुनि दुष्मन्तस्य मनः प्रवर्त्तते । (६१)

विदू ॥ ता कधेहि । (६२)

राजा ॥ ललिताप्सरोभव किल मुनेरपत्यं तदुज्झिताधिगतम् ।
अर्कस्योपरि शिथिलं च्युतमिव नवमालिकाकुसुमम् ॥ (६३)

विदू ॥ विहस्य ॥ भो जधा पिण्डीखज्जूरेहिं उव्वेजिदस्स तिन्तिडीए सद्धा भोदि तधा अन्तेउरइत्थिआरअणपरिभोइणो भवदो इअ पत्थणा । (६४)

राजा ॥ सखे तावदेनां न जानासि येन त्वमेवमवादीः । (६५)

---

(६१) अधुना वस्तुतोऽस्याः नीचता वेद्यितुमाह न चेति । परिहार्य्ये अप्राप्ये वस्तुनि पदार्थे च दुष्मन्तस्य मनो न प्रवर्त्तते यदस्तिमद् भवति ॥

(६२) विदू इति । अपरिहार्य्यतावीजं शुश्रूषमाण आह तेत्यादि । तद् कथय । तत् तावत् ॥

(६३) राजेति । अपरिहार्य्यतावीजं कथयति ललितेति । ललिताप्सरोभव ललिताभ्यो रमणीयाभ्यो अप्सरोभ्यो भूत तत् किल शकुन्तलारूप यस्य मुने कण्वस्य माता उज्झित सन्त मुनिना अधिगत लब्धमित्युज्झिताधिगतमपत्य न त्वौरसमित्यर्थं । अत्र प्रधानेनापत्येन सम्बन्धात् मुनेरिति षष्ठी न त्वधिगतमित्यस्य सम्बन्धात् तृतीया तस्य गुणीभूतत्वात् । अतोऽत्र उपपदविभक्तेः कारकविभक्ति र्गरीयसीति न्यायेन तृतीयया षष्ठ्या बाधस्याभावो न दोषाय यत उक्तम् । अर्थसम्बन्धेन प्रधानेन गुणस्य च । बाधो विधीयते यस्मात् ततोऽनेन न बाधिता इति । उपमया निर्दिशति अर्कस्येति । शिथिल च्युत अर्कस्य आकन्द इति प्रसिद्धस्य पादपस्य उपरि च्युत गलित नवमालिकाया कुसुम पुष्पमिव । यथा नवमालिका कुसुम ललितलतासम्भवमेव उपरिपातादर्कस्य वा कुसुममिव दृश्यते तदुज्झिताधिगत न तु प्रसूत कुसुम तथेत्यर्थः । अत्रोपमालङ्कार । इयमार्य्या ॥

(६४) विदू इति । विहस्य सस्मितं हसित्वा । सस्मित आह विहसितमित्यमर । भो इत्यादि । भो यथा पिण्डीखर्ज्जूरैरुद्वेजितस्य तिन्तिड्यां श्रद्धा तथा अन्तःपुरस्त्रीरत्नपरिभोगिनो भवत इयं प्रार्थना । पिण्डीखर्ज्जूरैः पिण्डीभूतैः खर्ज्जूरैः । पिण्डी तु पिण्डीतगरे स्यात् खर्ज्जूरभेदयोरिति मेदिनी । उद्वेजितस्यातिमाधुर्य्याज्जनितारुचेः । तिन्तिड्यां चिञ्चायां । अम्लत्वादिति भाव ॥

(६५) राजेति । एनां शकुन्तलां । अवादीरुक्तवानसि ॥

विदू॥ तं क्खु रमणीअं णाम जं भअदोवि विह्मअं उप्पादेदि ।(६६)

राजा॥ वयस्य किं बहुना । (६७)

चित्ते निवेश्य परिकल्पितसर्व्वयोगान्
रूपोच्चयेन विधिना विहिता कृशाङ्गी ।
स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे
धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः ॥ (६८)

विदू॥ 'सव्वधा पच्चादेसो क्खु सा रूववदीणं' । (६९)

---

(६६) विदू इति । तमित्यादि । तत् खलु रमणीयं नाम यद् भवतोऽपि विस्मयमुत्पादयति । तं वस्तु । खलु निश्चये । नाम सम्भावनायाम् । रमणीयमेव सम्भाव्यतामित्यर्थः ॥

(६७) राजेति । शकुन्तलाया रूपं वर्णयितुमामन्त्रयते वयस्येति । बहुना वर्णनेनेति शेषः ॥

(६८) चित्ते इति । धातुः विधातुः विभुत्वं निर्माणे प्रभुत्वम् । विभुः शिवे प्रभौ नित्ये इति विश्वः । तथा तस्याः शकुन्तलायाः [illegible] शरीरञ्च अनुचिन्त्य चिन्तयित्वा स्थितस्य मम सम्बन्धे । स्थितस्येत्यध्याहार्य्यं क्रिययोरेककर्तृकत्वापत्तेः । सा कृशाङ्गी तन्वी शकुन्तला परिकल्पिता अभिनवसृष्टा न तु सृष्टा महाभूतमयी इति भावः । ये सर्व्वयोगा निर्म्माणस्य निखिलोपाया उपादानकारणानीति यावत् । योगः सन्नहनोपायध्यानसङ्गतियुक्तिष्वित्यमरः । तान् चित्ते मनसि निवेश्य निधाय । न तु निर्म्माणमानवस्तुन सौकुमार्य्यभङ्गभिया हस्तयोः निवेश्येति भावः । रूपोच्चयेन सौन्दर्य्यराशिना करणेन । रूपमाकारसौन्दर्य्ये नाणकेऽप्युच्यते इति लिङ्गाद्युक्तमेव । विधिना स्रष्ट्रा विहिता निर्म्मिता अतएव अपरा अननुभूता वस्तुमात्रेभ्यः स्त्रीरत्नेभ्यः पृथग्विधा स्त्रीरत्नसृष्टिः रूपा स्त्रीरत्न प्रतिभाति प्रकाशते । कृशाङ्गीत्यत्र तु योगोपपत्तावपि नियमविरोधेऽपि अङ्गादन्यत्वात् ङीषादौ पाठादीप् । अङ्गाद्यन्ता यथा । अङ्गान्यद्दन्तकण्ठश्च ह्रस्वपर्य्यन्तमित्यपि । पुच्छो नेत्रं तथा गात्रञ्चमङ्गादिरीरित इति । अत्र लोकदृश्या सृष्ट्या अभेदेऽपि तद्भेदनिश्चयस्य सिद्धत्वादतिशयोक्तिरलङ्कारः । यदुक्तं दर्पणे । सिद्धत्वेऽध्यवसायस्यातिशयोक्तिर्निगद्यते । भेदेऽप्यभेदः सम्बन्धेऽसम्बन्धस्तद्विपर्य्ययः । पौर्व्वापर्य्यात्ययः कार्य्यहेत्वोः सा पञ्चधा मता इति । तद्विपर्य्ययः अभेदे भेदः सम्बन्धे असम्बन्धः । दण्डिनापि । विवक्षा या विशेषस्य लोकसीमातिवर्त्तिनी । असावतिशयोक्तिः स्यादिति । विशेषस्य उत्कर्षस्य । वृत्तमिदं वसन्ततिलकं नाम ॥

(६९) विदू इति । सर्व्वथेत्यादि । सर्व्वथा प्रत्यादेशः खलु सा रूपवतीनाम् ।

राजा ॥ परिजनानवलोक्य ॥ मृगयावेशमपनयन्तु भवन्तः । रैवतक ! त्वमपि स्वनियोगमशून्यं कुरु । (४९)

रैव ॥ जं महाराओ आणवेदि ॥ इति निष्क्रान्तः । (५०)

विदू ॥ किदं भअदा णिम्मच्छिअं ता इमस्सिं पादवच्छाआविरइदविदाणसणाहे सिलाअले उवविसदु भवं जाव अहम्मि सुहासीणो होमि । (५१)

राजा ॥ गच्छाग्रतः । (५२)

विदू ॥ एदु एदु भवं ॥ उभौ परिक्रम्योपविष्टौ । (५३)

राजा ॥ सखे माधव्य अनवाप्तचक्षुःफलोऽसि येन त्वया द्रष्टव्यानां परं न दृष्टम् । (५४)

विदू ॥ णं भवं अग्गदो मे वट्टदि । (५५)

---

(४९) राजेति । परिजनान् परिवारजनान् । अपनयन्तु त्यजन्तु । स्वनियोगं द्वारं द्वारे नियुक्तत्वादस्य । अशून्यं कुरु शून्यं न कुरु आत्मनेति शेषः । तत्र गच्छेति भावः । अथवा स्वनियोगं स्व मत्प्रादेशं अशून्यं कुरु पालय ॥

(५०) रैवेति । जमित्यादि । यन्महाराज आज्ञापयति ॥

(५१) विदू इति । किदमित्यादि । कृतं भवता शाश्वतं निर्मक्षिकं तदस्मिन् पादपच्छायाविरचितवितानसनाथे शिलातले उपविशतु भवान् यावदहमपि सुखासीनो भवामि । शाश्वतमिदानीम । निर्मक्षिकं मक्षिकापर्यन्तरहितम् । जनशून्यमित्यर्थः । पादपेति । पादपस्य शाखिनो या छाया तया विरचितं सम्पादितं यद् वितानं चन्द्रातपस्तत्सनाथे तद्युक्ते अत्र विशिष्टे समाधयत्विशिष्टम् । शिलातले शिलास्वरूपे । अथ सुखपयोरक्षो तत्रमिदमपर । यावत् यथा येनेत्यर्थः ॥

(५२) राजेति । सुगमम् ॥

(५३) विदू इति । एदित्यादि । एतु एतु भवान् । उभौ राजा विदूषकश्च ॥

(५४) राजेति । चक्षुःफलं रमणीयसन्दर्शनं अनवाप्तचक्षुःफलं तद्वेन स । परं श्रेष्ठम् ॥

(५५) विदू इति । णमित्यादि । ननु भवानेव मे अग्रतो वर्त्तते । महत्त्वमत्र । इत्यग्रतमस्य भवतो मद्दर्शनं त्वाम् कथं द्रष्टव्यानां परं न दृष्टं ममेति भावः ॥

राजा॥ सर्व्वः खलु कान्तमात्मानं पश्यति अहन्तु तामेवाश्रमललामभूतां शकुन्तलामधिकृत्य ब्रवीमि । (५६)

विदू॥ स्वगतम्॥ भोदु ण से पसरं वड्ढयिस्सं । (५७)

प्रकाशम्॥ भो जइ सा तवस्सिकस्सआ अणब्भत्थणीआ ता किं ताए दिट्ठाए । (५८)

राजा॥ धिङ्मूर्ख । (५९)

8 निवारितनिमेषाभिर्नेत्रपङ्क्तिभिरुन्मुखः ।
नवामिन्दुकलां लोकः केन भावेन पश्यति ॥ (६०)

---

(५६) राजेति । सर्व्वः खलु सर्व्वः एव जनः आत्मानं स्वं कान्तं सुन्दरं पश्यति अहन्तु आश्रमललामभूतामाश्रमभूषणस्वरूपां । प्रधानभूतश्चिह्नेषु पुण्ड्रमानभिलक्ष्मसु । भूषावाजिप्रभावेषु ललामं स्याल्ललाम चेति शब्दः । तां शकुन्तलामेव अधिकृत्य अभिप्रेत्य ब्रवीमि इत्यन्वयः पदमिति शब्दमिति ॥

(५७) विदू इति । स्वगतमनतिव्यक्तम् । भोदु इत्यादि । भवतु नास्य प्रश्रयं वर्द्धयिष्यामि । प्रश्रय प्रणयम् । प्रश्रय प्रणय समावित्यमरः ॥

(५८) प्रकाशमिति । भो इत्यादि । भो यदि सा तपस्विकन्यका अनभ्यर्थनीया तत् किं तया दृष्टया । तपस्विनो मुने कन्यका तपस्विकन्यका । अतोऽनभ्यर्थनीया भवत इति शेषः । किं फलमिति शेषः ॥

(५९) राजेति । परित्यागमपि वस्तुतोऽभ्यर्थनीयतां पश्यन् वैदग्ध्यमनभ्यर्थनीयाया दृष्टेर्न फलमिति यदुक्तं विदूषकेण तदेव प्रथमं खण्डयितुं निर्भर्त्सयन्नाह धिगिति । मूर्खेति सम्बोध्य श्लोकेन इत्यर्थ ॥

(६०) निवारितेति । लोको जनः सम्यक् श्रीहरिरितिवदासन्नमेवायानेकत्वम् । उन्मुख ऊर्द्धमुखः सन् निवारिताः त्याजिताः निमेषाः स्पन्दनानि याभिस्ताभिः नेत्रपङ्क्तिभिर्नेत्रश्रेणिभिः नवां प्रतिपदुदितामिन्दुकलां कलामात्रमिन्दुं केन भावेनाभिप्रायेण पश्यति । मङ्गलप्रसन्निगाह तस्य प्रायदर्शनादप्रीततया तदपगमसन्तोषेणैव न तु जिघृक्षयेति भावः । अत्र प्रतिपच्चन्द्रस्य दृष्टुमशक्यतया नवां द्वितीयोदितामिति केचित् व्याचख्युस्तन्न प्रतिपक्षेऽपि चन्द्रदर्शनसम्भवात् । यथाह ज्योतिस्तत्त्वे । चन्द्रो द्वादशभिः पश्चात् दृश्यः प्राग् यात्यदृश्यतामित्यभिधाय अनभ्यायास्तु शरदि हेमन्तेऽप्यतुषारिणि । रवेः सार्द्धदशांशेऽपि दृश्यतामेति चन्द्रमा इति । सार्द्धदशांशेऽपि द्वादशानां भागानां सार्द्धांशमध्येऽपि । अतएव प्रतिपच्चन्द्रमिव प्रजा नमन्ति किरातार्ज्जुनीयम् ॥

दर्भाङ्कुरेण चरणः क्षत इत्यकाण्डे
तन्वी स्थिता कतिचिदेव पदानि गत्वा ।
आसीद् विवृत्तवदना च विमोचयन्ती
शाखासु वल्कलमसक्तमपि द्रुमाणाम् ॥ (७९)

विदू ॥ गहीदपाधेओ किदोसि तए अदो अवुरक्कं तबोवणं त्ति तक्केमि ।'(८०)

राजा ॥ सखे तपस्विभिः कैश्चित् परिज्ञातोऽस्मि चिन्तय तावत् केनापदेशेन पुनराश्रमपदं गच्छामः । (८१)

विदू ॥ को अवरो अवदेसो णं भवं राआ । (८२)

राजा ॥ ततः किम् । (८३)

विदू ॥ णीवारच्छट्ठभाअं तावसा मे उवहरन्तु त्ति । (८४)

---

(७९) दर्भेति। तन्वी शकुन्तला कतिचित् कियन्ति पदानि गत्वैव दर्भाङ्कुरेण कुशाङ्कुरेण चरणः क्षत इत्यकाण्डे अनवसरे वस्तुतो दर्भाङ्कुराभावेऽपीत्यर्थः । इति व्याजात् स्थिता । काण्डोऽस्त्री दण्डबाणार्व्ववर्गावसरवारिष्वित्यमरः । तथा द्रुमाणां वृक्षाणां शाखासु असक्तं अलग्नमपि वल्कलं परिहितवल्कलञ्च विमोचयन्ती सती विवृत्तवदना पश्चाद्वलितवदना च आसीत् ॥

(८०) विदू इति। गहीत्यादि। गृहीतपाथेयः कृतोऽसि तया अतोऽस्तु एतत् तपोवनमिति तर्कयामि। गृहीतं पाथेयं सम्बलं पथिव्ययितव्यधनमिति यावत् येन स तथोक्तः कृतोऽसि मदनविकारादिनेति शेषः । तदालोकनमयाभ्यवहरणसम्भवादिति भावः । अत्र तपोवनमनुरागविषयतामापन्नम् ॥

(८१) राजेति। परिज्ञातः परिचितः । अपदेशेन निमित्तेन छद्मना वा। अपदेशस्तु निमित्तेऽपदेशे इत्यादिरमरः । आश्रमपदमाश्रमस्थानम् । प्रथमगमनं पुनराश्रमदर्शनमात्रमुक्तम् अत एव गमनापदेशश्चिन्तनीय उच्यते ॥

(८२) विदू इति। को इत्यादि। कोऽपरोऽपदेशः ननु भवान् राजा। ननु यतः ॥

(८३) राजेति। ततस्तस्माद् राजत्वादित्यर्थः ॥

(८४) विदू इति। णीवारेत्यादि। नीवारषष्ठभागं तापसा मे उपहरन्त्विति। नीवाराणां धान्यादितृणधान्यानां षष्ठभागं तापसास्तपस्विनो मे मह्यं उपहरन्तु ददतु इति अपदेश इत्यर्थः । अत्र ननु । षष्ठांशहारी आदेशो राजा इत्युपदिश्यतो । भान्तामापदमो

राजा ॥ मूर्ख ! अन्यमेव भागधेयमेते तपस्विनो मे निर्व्वपन्ति यो रत्नराशीनपि विहायाभिनन्द्यते। पश्य (८५)

यदुत्तिष्ठति वर्णेभ्यो नृपाणां क्षयि तद्धनम्।
तपःषड्भागमक्षय्यं ददत्यारण्यका हि नः॥ (८६)

नेपथ्ये॥ हन्त सिद्धार्थौ स्वः। (८७)

राजा॥ कर्णं दत्त्वा॥ अये प्रशान्तस्वरैस्तपस्विभिर्भवितव्यम्। (८८)

---

भाग. षष्ठो द्वादश एव वा। आददीताथ षड्भागं द्रुमांसमधुसर्पिषाम्। गन्धौषधिरसानाञ्च पुष्पमूलफलस्य च। पत्रशाकतृणानाञ्च वैदलस्य च चर्म्मणाम्। मृण्मयानाञ्च भाण्डानां सर्व्वस्याश्ममयस्य चेत्यादि॥

(८५) राजेति। म्रियमाणोऽप्याददीत न राजा श्रोत्रियात् करं। न च क्षुधास्य संसीदेत् श्रोत्रियो विषये वसन्निति, तथा—यस्य राज्ञस्तु विषये श्रोत्रियः सीदति क्षुधा। तस्यापि तत् क्षुधा राष्ट्रमचिरेणैव सीदति। श्रुतवृत्ते विदित्वास्य धर्म्म्यां वृत्तिं प्रकल्पयेत्। संरक्षेत् सर्व्वतश्चैनं पिता पुत्रमिवौरसमिति मनूपदेशात् करग्रहणमनभिनन्द्य आह मूर्खेति। अन्यं भोगादतिरिक्तमेव। भागधेयं करम्। भागधेयः करो बलिरित्यमरः। निर्व्वपन्ति ददति। यो भागधेयो रत्नराशीन् मणिसमूहान् विहाय अस्माभिः अभिनन्द्यते अस्माभिरादृियते तमन्यं भागधेयमित्यर्थः॥

(८६) तापसोपस्थितमन्यभागधेयं दर्शयति यदिति। हि यस्मात् नृपाणां राज्ञां वर्णेभ्यो द्विजेभ्यो यद्धनं शस्यादिकरभक्तत्वेन उत्तिष्ठति आयाति तत् क्षयि क्षयशीलं। म्लादेरिक्तिति यत्नाम्बादिनु। आरण्यका अरण्यवासिनः आश्रमिण इति यावत्। अक्षय्यं क्षयानर्हं तपसो धर्म्मस्य षड्भागं षष्ठभागं नोऽस्मभ्यं ददति। तदुक्तं मनुना। संरक्षमाणो राजाऽयं कुरुते धर्म्मसञ्चयम्। तेनायुर्वर्द्धते राज्ञो द्रविणं राष्ट्रमेव चेति। तथा। यदधीते यद्यजते यद् ददाति यदर्च्चति। तस्य षड्भागभाग् राजा सम्यग्भवति रक्षणादिति॥

(८७) नेपथ्य इति। अवतिष्ठे नगरं प्रस्थितस्तदृशतापौवेश स्वावेशात्कण्ठ्या समागच्छन्तौ तापसकुमारौ राजसम्भाषणदर्शनेन कृतार्थाविव हन्तेति। हन्त हर्षेऽनुकम्पायामित्यमरः। सिद्धौ निष्पन्नोऽर्थो नरपतिसाक्षात्काररूपो ययोस्तौ तथोक्तौ स्व आवामित्यादि॥

(८८) राजेति। अये इति सम्भ्रमे। अये क्रोधे विषादे च सम्भ्रमे स्मरणेऽपि चेति मेदिनी। प्रशान्ता अनुद्धताः स्वरा येषां ते तथोक्तैः प्रशान्तस्वरैरतएव तपस्विभिः। भवितव्यमिति भावे तव्यः॥

प्रविश्य दौवारिकः ॥ जअदु जअदु भट्टा एदे दुवे इसिकुमारआ पडिहारभूमिं उवत्थिदा । (८९)

राजा ॥ अविलम्बं प्रवेशय तौ । (९०)

दौवा ॥ जं भट्टा आणवेदि ॥ इति निष्क्रम्य ऋषिकुमाराभ्यां सह पुनः प्रविश्य ॥ इदो इदो भवन्ता । (९१)

उभौ ॥ राजानं विलोकयतः । (९२)

एकः ॥ अहो दीप्तिमतोऽपि विश्वसनीयतास्य वपुषः । अथवा उपपन्नमेतदस्मिन् ऋषिकल्पे राजनि । कुतः । (९३)

अध्याक्रान्ता वसतिरमुनाप्याश्रमे सर्व्वभोग्ये
१५ रक्षायोगादयमपि तपः प्रत्यहं सञ्चिनोति ।
अस्यापि द्यां स्पृशति वशिनश्चारणद्वन्द्वगीतः
पुण्यः शब्दो मुनिरिति मुहुः केवलं राजपूर्व्वः । (९४)

---

(८९) प्रविश्येति । जअदित्यादि । जयति जयति भर्त्ता एतौ द्वौ ऋषिकुमारौ प्रतीहारभूमिमुपस्थितौ । प्रतीहारभूमिः द्वारभूमिः । स्त्री द्वा द्वार प्रतीहार इत्यमरः ॥

(९०) राजेति । सुगमम् ॥

(९१) दौवेति । जमित्यादि । यद् भर्त्ता आज्ञापयति । परिक्रम्य प्रविश्य । इद इत्यादि । इत इतो भवन्तौ । आगच्छतामिति शेषः ॥

(९२) उभाविति । ऋषिकुमारावित्यर्थः ॥

(९३) एक इति । ऋषिकुमारयोरिति शेषः । अहो विस्मये । दीप्तिमतोऽपि तेजस्विनोऽपि । विश्वसनीयता आश्वसनीयता । कल्पान्तरेण विषयमपाकरोति अथवेति । ऋषिकल्पे ईषदूने ऋषौ । व्यादेशोग इति कल्पप्रत्ययः । अस्मिन् राजनि एतत् दीप्तिमतोऽपि विश्वसनीयत्वमुपपन्नं युक्तम् । ऋषिकल्पत्वे हेतुमुत्थापयति कुत इति ॥

(९४) अध्येति । न केवलं युष्माकं वनाश्रमवासिनाम् अमुना राज्ञापि सर्व्वाणि भोग्यानि भोक्तव्यानि यत्र च तथोक्ते आश्रमे वसतिः स्थितिरध्याक्रान्ता अधिकृता । इतिपदे आश्रमो वनं राजपदे गार्हस्थ्यम् । आश्रमो ब्रह्मचर्य्यादौ वानप्रस्थे वने मठे इति मेदिनी । तथा युष्माकमेव न केवलं तपस्विनाम् अयमपि रक्षायोगात् प्रजापालनसम्बन्धात् प्रत्यहं प्रतिदिनं तपोधर्म्मं सञ्चिनोति संवर्द्धयति । तपसां षड्भागपादो राज्ञः धर्म्मो लोकान्तरे सञ्चिनोतीति शिवम् । यथाह मनुः । स्वाध्यायनिरतानां च प्रजानाञ्चैव पालनम् । पुन्ना

द्वितीय ॥ सखे अयं स बलभित्सखो दुष्मन्तः । (९५)

प्रथम ॥ अथ किम् । (९६)

द्वितीय ॥ तेन हि । (९७)

नैतच्चित्रं यदयमुदधिश्यामसीमां धरित्री-
मेकः कृत्स्नां नगरपरिघप्रांशुबाहुर्भुनक्ति ।
आशंसन्ते समितिषु सुराः सक्तवैरा हि दैत्यै-
रस्याधिज्ये धनुषि विजयं पौरुहूते च वज्रे ॥ (९८)

---

ब्राह्मणानाञ्च राज्ञा श्रेयस्करं चरमिति । तथा वशिनो जितेन्द्रियस्य अस्यापि राज्ञः केवलं विशेषात् राजपूर्व्वो राजशब्दपूर्व्वो मुनिः इति एतदर्थं क पुण्यं पवित्रं शब्दो राजर्षिरत्रादिति भावः । चारयन्ति देशान्तरेषु कीर्त्तिं प्रचारयन्तीति चारणाः कुशीलवाख्यनटविशेषाः । चारणास्तु कुशीलवा इत्यमरः । तद्द्वन्द्वेन तनुस्त्रीषु साभ्याः । गीतं पठितं यत् । स्त्रीपुंसौ मिथुनं द्वन्द्वमित्यमरः । मुहुः पुनः पुनः द्योभिरन्तरीक्षे श्रूयते । अत उपपन्नमित्यर्थः सर्व्वंभोग्ये इत्यादिभिरीषदूनत्वं कविर्ध्वनी बोधयति । कविभिरत्र प्रदर्शनादत्र तुल्ययोगितालङ्कारः । यदुक्तं दण्डिना । विवक्षितगुणोत्कर्षं यत्र समीकृत्य कस्यचित् । कीर्त्तनं स्तुतिनिन्दार्थं सा मता तुल्ययोगितेति । इदं मन्दाक्रान्ता नाम वृत्तम् ॥

(९५) द्वितीय इति । ऋषिकुमारयोरिति शेषः । अयं दृश्यमानः । स कथाप्रसङ्गेन श्रुतः । बलं भिनत्ति सूदयतीति बलभित् बलारातिरिन्द्र इति यावत् । तस्य सखा बलभित्सखः । सख्यहोरात्र इति च ॥

(९६) प्रथम इति । अथ किं किमन्यत् यदुक्तं तदेवसत्यं । अङ्गीकारेऽपि चाथकिमिति हारावली ॥

(९७) द्वितीय इति । तेन हि तेनैव ॥

(९८) नैतदिति । नगरपरिघो नगरद्वारार्गलाविव प्रांशू दीर्घौ बाहू यस्य स तथोक्तः । परिघो योगभेदेऽस्त्रविशेषेऽर्गलघातयोरिति मेदिनी । दीर्घं प्रांशु विशालञ्चेति धनञ्जयः । अयं राजा उदधेः समुद्रस्य श्यामः कालिमा नीरभाग इति यावत् । स एव सीमा यस्याः सा तथोक्ता तत्कृत्स्नामशेषां धरित्रीं भुवं यदेकोऽद्वितीयो भुनक्ति पालयति । अत्र नावने भुजो यं ष्णाचात्मनेपदम् । एतन्न चित्रमाश्चर्यं । हि यस्मात् दैत्यैरसुरैः सक्तं सम्भृतं वैरं विद्वेषो येषां ते तथोक्ताः सुराः देवाः । वैरं विरोधो विद्वेष इत्यमरः । समितिषु युद्धेषु । समित्याजिसमिद्युध इत्यमरः । अधिज्ये अधिगतगुणे अस्य राज्ञो धनुषि पौरुहूते माहेन्द्रे वज्रे च विजयमाशंसन्ते अभ्यर्थयन्ते न त्वन्यस्मिन् कस्मिंश्चिदित्यर्थः । तथा च

उभौ उपगम्य ॥ विजयस्व राजन् । (९९)

राजा ॥ आसनादुत्थाय ॥ अभिवादये भवन्तौ । (१००)

उभौ ॥ स्वस्ति भवते । इति फलान्युपनयतः । (१०१)

राजा ॥ सप्रणामं परिगृह्य ॥ आगमनप्रयोजनं श्रोतुमिच्छामि । (१०२)

उभौ ॥ विदितो भवानिहस्थस्तपस्विनाम् । ते च भवन्तमभ्यर्थयन्ते । (१०३)

राजा ॥ किमाज्ञापयन्ति । (१०४)

उभौ ॥ तत्रभवतः कण्वस्य कुलपतेरसान्निध्यात् रक्षांसि न इष्टिविघ्नमुत्पादयन्ति तत् कतिपयदिवसमात्रं सारथिद्वितीयेन भवता सनाथीक्रियतामाश्रम इति । (१०५)

---

नागराणां मनोभवमेको भुजस्तोत्रविचित्रं स्वर्गलोकपथ्यं स्तोऽस्याभिचारो स्वाम्य इत्याय धनुराकरणिकत्रापि वज्रे च भनु पौरुहूताय सुरयुवा विजयाय तत्र विषयत्वस्यैकधर्ममत्रोपादानात् दीपकालङ्कारः । यदुक्तं प्रकाशे । सकृद्वृत्तिस्तु धर्मस्य प्रकृताप्रकृतात्मनाम् । सैव क्रियासु बह्वीषु कारकस्येति दीपकमिति । प्राकरणिकाप्राकरणिकानां धर्मस्य सकृद्वृत्तिरेकं दीपकं कारकस्य बह्वीषु क्रियासु सकृद्वृत्तिरपरं दीपकम् ॥

(९९) उभाविति । विजयस्वेति विपराजीतात्मनेपदम् ॥

(१००) राजेति । अभिवादये प्रणमामि । मन्वतृकर्त्रयात्मनेपदम् ॥

(१०१) उभाविति । स्वस्ति मङ्गलम् । स्वस्तिमङ्गलपोष्याद्यापनिपातनादिष्विति भागुरिः । भवत इति मङ्गलार्थं सम्बन्धिना चतुर्थी । फलानीति । यदाह । रिक्तपाणिर्न पश्येत्तु राजानं देवतां गुरुम् । नैमित्तिकं वैद्यं च फलेन फलमादिशेदिति ॥

(१०२) राजेति । परिगृह्य स्वीकृत्य ॥

(१०३) उभाविति । भवान् इहस्थो विदितः आश्रमस्थित इत्येवमनुस्वारेण ज्ञातः । इहागमनज्ञाने अभ्यर्थं नामत्वात् विदित इति वर्तमाने क्त तद्योगात् तपस्विनामिति कर्तरि षष्ठी । ते तपस्विनः ॥

(१०४) राजेति । सुगमम् ॥

(१०५) उभाविति । कुलपते कण्वस्य । असान्निध्यात् तदुपस्थानात् । रक्षांसि राक्षसाः । इष्टिविघ्नं यागव्याघातम् । इष्टि यागेच्छयो रित्यमरः । कतिपयानि कतिचित् दिवसानि मात्रा परिमाणं यस्य । सारथिना द्वितीयो यस्य स सारथिद्वितीयस्तेन । अस्मै स्त्रभि

राजा ॥ अनुगृहीतोऽस्मि । (१०६)

विदू ॥ अपवार्य्य ॥ एस दाणिं भवदो अणुऊलो गलहत्थो । (१०७)

राजा ॥ स्मितं कृत्वा ॥ रैवतक मद्वचनादुच्यतां सारथिः सबाणकार्म्मुकं रथमुपस्थापयेति । (१०८)

दौवा ॥ जं देवो आणवेदि ॥ इति निष्क्रान्तः । (१०९)

उभौ ॥ सहर्षम् । (११०)

अनुकारिणि पूर्व्वेषां युक्तरूपमिदं त्वयि ।
आपन्नाभयसत्रेषु दीक्षिताः खलु पौरवाः ॥ (१११)

राजा ॥ सप्रणामम् ॥ गच्छतां भवन्तौ अहमनुपदमागत एव । (११२)

उभौ ॥ विजयस्व ॥ इति निष्क्रान्तौ । (११३)

राजा ॥ माधव्य अप्यस्ति ते कुतूहलं शकुन्तलादर्शनं प्रति । (११४)

---

शान्तमोपरोधसंभ्रम इति ते रक्षितमिति भावः । सनाथीक्रियतां सस्वामिकीक्रियताम् । आश्रम कुलपतेरसान्निध्यादस्वामिको मठ । इति अभ्यर्थयमा इत्यन्वयः ॥

(१०६) राजेति । अनुगृहीतोऽस्मि अनुगृहीतः ॥

(१०७) विदू इति । अपवार्य्य पराहत्य । तदुक्तम् । तद्भवेदपवारितम् । रहस्यं तु यदन्यस्य पराहृत्य प्रकाश्यते इति । एस इत्यादि । एष इदानीं भवतोऽनुकूलो गलहस्तः । इदानीमेव गलहस्तः कर्म्मणि नियोगो भवतोऽनुकूल संजातः ॥

(१०८) राजेति । सबाणकार्म्मुकं बाणेन कार्म्मुकेण धनुषा च सहितं । उपस्थापय आनय । इति उच्यतामित्यन्वयः ॥

(१०९) दौवेति । जमित्यादि । यद्देव आज्ञापयति । देवो राजा ॥

(११०) उभाविति । सुगमम् ॥

(१११) अन्विति । पूर्व्वेषां पुरुवंशानामनुकारिणि सदृशे त्वयि इदं भयात् त्राणमङ्गीकरणं युक्तरूपं अनुरूपं खलु यस्मात् पौरवाः पुरुवंशप्रभवा राजानः आपन्नानां आपत्प्राप्तानामभयसत्रेषु अभयदानरूपयागेषु यद्वा सदाभयदानेषु दीक्षिता व्रतिनः । आपन्न आपत्प्राप्ते स्यादिति सत्रमाच्छादने यज्ञे सदादाने वनेऽपि चेति चामरः ॥

(११२) राजेति । अनुपदमनुगच्छन् । अन्वगन्वक्षमनुगेऽनुपदं क्लीबमव्ययमित्यमरः । आगत एव आगतत्वेन निश्चेतव्य इत्यर्थः ॥

(११३) उभाविति । सुगमम् ॥

(११४) राजेति । अपि प्रश्ने । कुतूहलं लालसा ॥

विदू ॥ पढमं अपरिबाधं आसी सम्पद रक्खसवुत्तन्तेण सपरिबाधं । (११५)

राजा ॥ मा भैषीः ननु मत्समीप एव वर्त्तिष्यसे । (११६)

विदू ॥ एस तुह रथचक्करक्खोभूदोह्मि जइ ण कोवि आअच्छिअ विग्घं करेदि । (११७)

प्रविश्य दौवारिक ॥ जअदु जअदु भट्टा सज्जो रधो भत्तुणो विजअप्पत्थाणं अवेक्खदि, एस उण णअरादो देवीणं आणत्तिहरो करभओ आअदो । (११८)

राजा ॥ सादरम् ॥ किमम्बाभिः प्रेषितः । (११९)

दौवा ॥ अध इ । (१२०)

राजा ॥ तेन हि प्रवेश्यताम् । (१२१)

दौवा ॥ तह ॥ इति निष्क्रम्य पुनः करभकेण सह प्रविश्य ॥ करभक्र ! एसो भट्टा उवसप्पदु भव । (१२२)

---

(११५) विदू इति । पढममित्यादि । प्रथममपरिबाधमासीत् साम्प्रतं राक्षसवृत्तान्तेन सपरिबाधम् । अपरिबाधं कष्टं विना । सपरिबाधं कष्टेन सह । तुल्यत्वमिति विधेयम् ॥

(११६) राजेति । भैषीरिति मा टौ नेति टौ । ननु यत । वर्त्तिष्यसे स्थास्यसि ॥

(११७) विदू इति । एस इत्यादि । एष तव रथचक्ररक्षीभूतोऽस्मि । यदि न कोऽप्यागत्य विघ्नं करोति । युध्यमानस्य कश्चिद्रथचक्ररक्षकोऽपेक्ष्यते, तत्राह तथाभूतोऽस्मीत्यर्थः । कोऽपि राक्षसः । विघ्नं चक्ररक्षाया इति शेषः ॥

(११८) प्रविश्येति । जअदित्यादि । जयति जयति भर्त्ता सज्जो रथो भर्त्तुर्विजयप्रयाणमपेक्षते । एष पुनर्नगराद् देवीनामाज्ञाप्रहरः करभक आगतः । सज्जो बद्धास्त्रः । विजयप्रयाणं विजयाय प्रस्थानम् । अपेक्षते आकाङ्क्षति । आज्ञाप्रहरो वार्त्तावहः । करभकस्तन्नामा ॥

(११९) राजेति । सादरं सानादरम् । अम्बाभिर्मातृभिः । अम्बा मातेति शब्दार्णवः । प्रेषितः प्रेरितः ॥

(१२०) दौवेति । अध इ अथ किम् ॥

(१२१) राजेति । सुगमम् ॥

(१२२) दौवेति । तह तथा । करभअ इत्यादि । करभक एष भर्त्ता उपसर्पतु भवान् । उपसर्पतु उपगच्छतु ॥

करभक ॥ उपसृत्य प्रणम्य च ॥ जअदु जअदु भट्टा देवीओ आणवेन्ति।(१२३)

राजा ॥ किमाज्ञापयन्ति। (१२४)

कर॥ आआमिणि चउत्थदिअहे पुत्तपिण्डपालणो णाम उववासो भविस्सदि तहिं दीहाउणा अवस्सं अम्हे सम्भावइदव्व त्ति। (१२५)

राजा ॥ इतस्तपस्विकार्यमितो गुरुजनाज्ञा उभयमनतिक्रमणीय तत् किमत्र प्रतिविधेयम्। (१२६)

विदू॥ भो तिसङ्कु विअ अन्तरा चिट्ठ। (१२७)

राजा॥ सत्यमाकुलीभूतोऽस्मि। (१२८)

कृत्ययो र्भिन्नदेशत्वाद् द्वैधीभवति मे मनः।
पुरः प्रतिहतं शैलैः स्रोतः स्रोतोवहा यथा॥ (१२९)

---

(१२३) करेति। जअदु इत्यादि। जयति जयति भर्ता देव्य आज्ञापयन्ति ॥

(१२४) राजेति। सुगमम् ॥

(१२५) करेति। आआमिणीत्यादि। आगामिनि चतुर्थदिवसे पुत्रपिण्डपालनो नाम उपवासो भविष्यति तत्र दीर्घायुषा अवश्यं वयं सम्भावयितव्या इति। पुत्रेति। पुत्रपिण्डानां पुत्रेण प्रदीयमानपिण्डानां पालनं रक्षणं सम्भावनमिति यावत् यस्मात् स तथोक्तः। भविष्यति अनुष्ठित इत्यादि। सम्भावयितव्या बहुमन्तव्या आगमनेन सम्भावयितव्या इति यावत्। इति आज्ञापयन्तीत्यन्वयः ॥

(१२६) राजेति। अनतिक्रमणीयमनवहेलनीयम्। तत् तस्मात्। अत्र अनयोर्विषययोः किं कर्म प्रतिविधेयमुपायतयानुष्ठातव्यम् ॥

(१२७) विदू इति। भो इत्यादि। भोस्त्रिशङ्कुरिवान्तरा तिष्ठ। न दिवं न च भूमिमन्तराधितिष्ठति यथा त्रिशङ्कुस्त्वं तथान्तरा तिष्ठेत्यर्थः। श्रूयते हि रामायणादौ कौशिकाश्रितस्तपोवीर्येणोद्गमितोऽपि शाक्रस्य स्वरोरम्भितशङ्कुर्नोमेदाकुकुत्स्थितोश्वरो गुरुशापोपजनितप्रातिकूल्येनाखण्डलेनाधःपातितोऽन्तरान्तरीक्ष एवावाक्शिरास्तिष्ठतीति। मोङ्गत तु विस्तरभयादत्र ॥

(१२८) राजेति। सत्यमित्युपहासप्रतिषेधाय। आकुलीभूतोऽस्मि व्यग्रीभूतोऽस्मि ॥

(१२९) कृत्ययोरिति। कृत्ययोरावश्यकानुष्ठानयोर्मातृसम्भावनरक्षयो भिन्नदेशत्वात् भिन्नो अनेको देशो अधिकरणं यो ययोस्तयोस्तस्मात् मम मनः पुरो अग्रे शैलैः गिरिभिः प्रतिहतं रुद्धप्रसरं स्रोतोवहायाः नद्याः स्रोतो यथा स्रोत इव द्वैधीभवति एकमप्यनेकमिव भवति। अत्रोपमालङ्कारः ॥

विचिन्त्य ॥ सखे माधव्य त्वमप्यम्बाभिः पुत्र इव गृहीत स्तस्मादितः प्रतिनिवृत्य तपस्विकार्यव्यग्रतामस्माकमावेद्य तत्रभवतीनां पुत्रकार्यमनुष्ठातुमर्हसि। (१२०)

विदू — भो मा रक्खसभीरुअं मं अवगच्छ। (१२१)

राजा ॥ स्मितं कृत्वा ॥ भो महाब्राह्मण कथमिदं त्वयि सम्भाव्यते। (१२२)

विदू ॥ तेण हि राआणुअ विअ गच्छिदुं इच्छेमि। (१२३)

राजा ॥ ननु तपोवनोपरोधः परिहरणीय इति सर्वाननुयात्रिकांस्त्वयैव सह प्रेषयिष्यामि। (१२४)

विदू ॥ सगर्व्वम् ॥ जुवराओम्हि दाणिं संवुत्तो। (१२५)

राजा ॥ आत्मगतम् ॥ चपलोऽयं ब्राह्मणबटुः कदाचिदिमामस्मत्प्रार्थनामन्तःपुरिकाभ्यो निवेदयेत्। भवत्वेवं तावद् वक्ष्यामि। (१२६)

---

(१२०) विचिन्त्येति विचार्य्य सर्व्वं। प्रतिनिवृत्य प्रतिगत्य। तवेति। तपस्विनां कार्य्ये व्यग्रता व्यासक्तताम्। व्यग्रो व्यासक्त आकुले इत्यमरः। आवेद्य विज्ञाप्य। अनुष्ठातुं कर्त्तुम्॥

(१२१) विदू इति। भो इत्यादि। भो मा राक्षसभीरुकं मामवगच्छ। अवगच्छ जानीहि॥

(१२२) राजेति। महाब्राह्मणेत्यनेनाल्पमतित्वात्कृपण स्तुतिमभणयन् विप्रापकर्षं व्याहरति। महाब्राह्मणशब्दो हि नाराचप्रसादाप्रयाशसारकविषये प्रयुज्यते। इदं राक्षसभीरुत्वम्। सम्भाव्यते मन्यते॥

(१२३) विदू इति। तेणेत्यादि। तेन हि राजानुज इव गन्तुमिच्छामि॥

(१२४) राजेति। नन्वित्युक्ताने। तपोवनस्य उपरोधः पीडा परिहरणीयो निवारणीय। इति हेतो। अनुयात्रिकान् अनुगतान् सैनिकान्॥

(१२५) विदू इति। सगर्व्वं साहङ्कारम्। गर्व्वोऽभिमानोऽहङ्कार इत्यमरः। जुव इत्यादि। युवराजोऽस्मि इदानीं संवृत्त। युवराज कुमार। युवराजस्तु कुमारो भर्त्तृदारक इति नाट्योक्तावमरः॥

(१२६) राजेति। आत्मगतमनतिस्पष्टम्। चपलश्चञ्चल। ब्राह्मणबटु ब्राह्मणबालक। बालको माणवो बाल किशोरो बटुरित्यपीति शब्दरत्नावली। कदाचिच्छब्द सम्भावना द्योतयति। इत्यमेव प्रयुक्त कादम्बर्य्याम्। यथा पूर्व्वभागे। कदाचिदनभि

विदूषकस्य हस्ते दत्त्वोत्ता। प्रकाशम् ॥ सखे माधव्य ऋषिगौरवादाश्रमपदं प्रविशामि न खलु सत्यमेव तापसकन्यायामभिलाषो मे। पश्य। (१३७)

क्व वयं क्व परोक्षमन्मथो मृगशावैः सह वर्द्धितो जनः।
परिहासविकल्पितं सखे परमार्थेन न गृह्यतां वचः ॥ (१३८)

विदू॥ एवमेदं। (१३९)

राजा॥ माधव्य त्वमपि स्वनियोगमनुतिष्ठ अहमपि तपोवनरक्षार्थं तत्रैव गच्छामि। (१४०)

इति निष्क्रान्ताः सर्वे।

द्वितीयोऽङ्कः। (१४१)

---

मदनविकारदर्शनकुपितोऽयं शापाभिशापं करोति यो दुरकोपो हि मुनिजनस्य प्रकृतिरित्यवधार्येति। उत्तरभागे च। कदाचिदसौ वैचक्ष्याद्यस्यानालोकापरपर्यन्तस्यैव तद्दुःखं पि पार्श्वमवहिता, भवन्तु भवन्त इति। तथा कदाचिदस्य वृत्तान्तस्याभिज्ञा महाश्वेतापि भवत्येव ननु तां तु नावन्न गच्छामि इत्यादि। असत्यार्थं मां शकुन्तलाभिलाषम्। अन्तःपुरिकाभ्यो महिषीभ्यः। विपाव्यीक भवत्विति। एवं वक्ष्यमाणम् ॥

(१३७) विदूषकस्येति। प्रकाशं स्पष्टम्। ऋषिगौरवाद् ऋषीणां सम्मानात्। तापसकन्यायां शकुन्तलायाम्। तदभिलाषस्यासत्यतां दर्शयति पश्येति ॥

(१३८) क्वेति। क्व वयं सकलकलाभिज्ञनागरपुरुषा इति भावः। क्व परोक्षोऽनाविष्कृतो मन्मथः कामो यस्य स तथोक्तः मृगशावैः कुरङ्गशिशुभिः सह वर्द्धितः परिपालितो जनः शकुन्तलारूपः। न कदाचिदस्मयोः परस्परमन्याभिलाषसम्भव इति भावः। परोक्ष इति। अक्ष्णामिन्द्रियाणां परं व्यतिक्रम्य परोक्षं। परशब्दस्य यान्ताव्ययत्वात् पूर्वनिपातः। सखे परिहासेन विकल्पितमभिहितमभिहितं वचस्तापसकन्याभिलाषसारं परमार्थेन याथार्थ्येन न गृह्यतां न मन्यताम्। वृत्तमेतत् सुन्दरी नाम। तदुक्तम्। अयुजो यदि सौ जगौ युजे सभरा लौ यदि सुन्दरी तदेति ॥

(१३९) विदू इति। एवमेदं एवमिदम् ॥

(१४०) राजेति। स्वनियोगमात्मानं प्रत्याशां अनुतिष्ठ पालय ॥

(१४१) इतीति। इति स्वात्मनो वत्याम्। अङ्कः परिच्छेदः ॥

इति श्रीकृष्णनाथपञ्चाननकृतायामभिज्ञानशकुन्तलटीकायां मनोविकाशाख्यायां द्वितीयाङ्कविवरणम् ॥

# तृतीयोऽङ्कः ।

ततः प्रविशति कुशानादाय यजमानशिष्यः । (१)

शिष्यः ॥ विचिन्त्य सविस्मयम् ॥ अहो महाप्रभावो राजा दुष्मन्तः, येन प्रविष्टमात्र एवाश्रमं तत्रभवति सारथिद्वितीये राजनि निरुपप्लवानि नः कर्म्माणि संवृत्तानि । (२)

का कथा बाणसन्धाने ज्याशब्देनैव दूरतः ।
हुङ्कारेणेव धनुषः स हि विघ्नान् व्यपोहति ॥ (३)

यावदेतान् वेदिसंस्तरणार्थं दर्भान् ऋत्विग्भ्य उपाहरामि । (४)

परिक्रम्यावलोक्य च ॥ आकाशे ॥ प्रियंवदे कस्येदमुशीरानुलेपनं मृणालवन्ति च नलिनीदलानि नीयन्ते । (५)

---

(१) तत इति । आदाय गृहीत्वा । यजमानशिष्यः यागादेष्टा आरब्धयाग इति यावत् कश्चित् तस्य शिष्यः । आदेष्टा त्वध्वरे व्रती । यष्टा च यजमानश्चेत्यमरः ॥

(२) शिष्य इति । अहो विस्मये । महान् प्रभावो दण्डज तेजो यस्य स महाप्रभावः । स प्रतापः प्रभावश्च यत् तेजः कोषदण्डजमित्यमरः । येन हेतुना । प्रविष्टमात्र एव अचिरप्रविष्ट एव । निरुपप्लवानि निरुपद्रवाणि । कर्म्माणि इष्टिरूपाणि ॥

(३) केति । बाणसन्धाने बाणस्य धनुष्यारोपणे का कथा तत्कथापि नास्तीत्यर्थः । स हि राजा हुङ्कारेण हुमितिध्वनिनेव । यर्थात् स्वकर्मे कारणत्वयो वक्तव्य । दूरतो दूरात् धनुषो ज्याशब्देन मौर्व्याः शब्देनैव विघ्नान् विघ्नभूतान् राक्षसान् व्यपोहति निवर्त्तयति ॥—

(४) यावदिति । एतान् दर्भान् कुशान् वेद्याः यागार्थं निर्म्मितपरिष्कृतभूमेः संस्तरणार्थमास्तरणार्थम् । वेदिः परिष्कृता भूमिरित्यमरः । ऋत्विग्भ्यो वस्त्रालङ्कारादिभिः परितोष्य वृतेभ्यो याजकेभ्यः । अग्निप्राद्या धनैर्वार्या ऋत्विजो याजकाश्च ते इत्यमरः । उपाहरामि ददामि ॥

(५) परीति । आकाशे शून्ये अदृष्टस्य वदतायामपि रङ्गभूमौ प्रियंवदा दृष्टेषा इत्यर्थः । कस्येति सम्बन्धविवक्षया षष्ठी । उशीरानुलेपन पिष्टवीरणमूलम् । स्याद्वीरणं वीरतरं मूलेऽस्योशीरमस्त्रियामित्यमरः । नीयन्ते प्राप्यन्ते त्वयेति शेषः ॥

श्रुतिमभिनीय॥ किं कथयसि आतपलङ्घनाद् बलवदस्वस्थशरीरा शकुन्तला तस्याः शरीरनिर्व्वापणायेति। प्रियंवदे यत्नादुपचर्य्यतां सा। हि तत्रभवतः कुलपतेर्द्वितीयमुच्छ्वसितम्। अहमपि तावद् वैतानिकं शान्त्युदकमस्या एव गौतमीहस्ते विसर्ज्जयामि॥ इति निष्क्रान्ता। (६)

विष्कम्भकः। (७)

॥ ततः प्रविशति समदनावस्थो राजा। (८)

राजा॥ सचिन्तं निश्वस्य। (९)

---

(६) श्रुतिमिति। श्रुति श्रवणमभिनीय रूपयित्वा श्रवणायेव कर्णं दत्त्वेति यावत्। आतपलङ्घनाद् रविकराभिभवात्। बलेति। बलवदत्यर्थं मस्वस्थमप्रकृतिस्थं शरीरं यस्याः सा अस्वस्थशरीरेत्यर्थः। शरीरनिर्व्वापणाय देहस्य तापोपशमनाय। इति किं कथयसीत्यन्वयः। अत्र चरकः। फलिनीलोध्रसेव्याम्बुवेतसपल्लवं कुटन्नटम्। काशीयकरसोमेन दाहे शस्तं प्रलेपनमिति। सेव्यमुशीरं। हूनुतच। शीतविधानमत ऊर्ध्वमह प्रवक्ष्ये दाहप्रशान्तिकरमूर्ध्विमता नराणाम्। तमादितो मलयजेन हितं प्रदेहचन्द्राशुहारतुहिनोदकशीतलेन। शीताम्बुशीतलतरैश्च शयानमेव क्षारैर्मृणाल-कमलोत्पलपत्रपृष्ठेषु। भिन्नोत्पलोज्ज्वलहिमे शयने शयीत पत्रेषु वा सजलबिन्दुषु पद्मिनीनामिति। तथा। दाहाभिभूतमथवा परिषेचयेत्तु शीतैर्घृतैरथ च चन्दनवारिभि कामिति च। प्रियंवदाया प्रवेशनाकप्रयोगयोरनभिनयादुशीरनलिनीदलाहरणस्य दृश्य दृश्याव्यमानया गुहायथेन गमनमसुखे हृतदामस्यादलिनमिव वदायास्तदानीमभवदिति स्थूल यति। यत्नात् प्रयासात्। उपचर्य्यतां परिचर्य्यताम्। हि यतः। सा शकुन्तला। द्वितीयमुच्छ्वसितं बहिश्चरप्राणभूता। वैतानिकं यज्ञियम्। क्रतुविस्तारयोरस्त्री वितानमित्यमरः। शान्त्युदकं शान्तिकुम्भस्थमुदकम्। अस्या शकुन्तलार्थं। गौतमीहस्ते विसर्ज्जयामि गौतमीहस्ते दापयामि स्त्रीत्यस्मिन्निति शेषः॥

(७) विष्कम्भक इति। तदाख्यं अर्थविशेषं। वृत्तानामवक्ष्यितानामपि शकुन्तला तापतदर्थं प्रियंवदाकृतोशीरानुलेपनादिवस्तूनां वर्त्तिष्यमाणानामप्युपचर्य्यं शापशकुन्तलाप्रवेशा दीनां निदर्शकत्वात्। स च मध्यमपात्रेण प्रयोजितत्वेन शुद्ध। तदुक्तम्। वृत्तवर्तिष्य-माणानां कथांशानां निदर्शक। अभिप्रायं स्तु विष्कम्भ आदावङ्कस्य दर्शित। मध्येन मध्यमाभ्यां वा पात्राभ्यां प्रयोजित। शुद्ध स्यात् स तु सङ्कीर्णो नीचमध्यमकल्पित इति॥

(८) तत इति। समदनावस्थ सारदृशापन्न॥

(९) राजेति। सचिन्तं शकुन्तलाकृतिमस्मितम्। आधिश्चिन्ता आधिरातिश्चेत्यमरः॥

जाने तपसो वीर्यं सा बाला परवतीति मे विदितम्।
न च निम्नादिव सलिलं निवर्त्तते मे ततो हृदयम्॥ (१०)

भगवन् मन्मथ कुतस्ते कुसुमायुधस्य सत तैक्ष्ण्यमेतत्। (११)

स्मृत्वा॥ आः ज्ञातम्। (१२)

अद्यापि नूनं हरकोपवह्निस्त्वयि ज्वलत्यौर्व इवाम्बुराशौ।
त्वमन्यथा मन्मथ मद्विधानां भस्मावशेषः कथमेवमुष्णः॥ (१३)

अपि च। त्वया चन्द्रमसा चातिविश्वसनीयाभ्यामभिसन्धीयते कामिसार्थः। कुतः। (१४)

---

(१०) जाने इति। तपसो वीर्यं प्रभावमहं जाने अनुभवामि। वीर्यं बले प्रभावे चेत्यमरः। एतेन स्वेच्छाक्रमोऽस्या परित्यक्त इति सूचितम्। एव सा बाला शकुन्तला परवती परायत्ता इति मे विदितमनुभूयमानं भवति। एतेन तद्विच्छयापि समागमासम्भावितं दर्शयति। परं मम मनः निम्नात् सलिलं तोयमिव ततः शकुन्तलातो न निवर्त्तते पराङ्मुखं भवति। तदत्र किं करणीयमिति भावः। अत्रोपमालङ्कारः। इयमार्या॥

(११) भगवन्निति। भगवन् माहात्म्यवन्। भगः श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्त्तिष्वित्यमरः। मन्मथ मदन ते तव कुसुमानि पुष्पाण्येवायुधानि प्रहरणानि यस्य स तथोक्तस्य सतः कुतः कस्मादेतत् तैक्ष्ण्यं तीक्ष्णभावः॥

(१२) स्मृत्वेति। स्मृत्वा स्मृतिं रूपयित्वा। चिन्तया तीक्ष्णताबीजनिश्चयादाह आःमिति। आः स्थाने निश्चयस्मृत्योरिति मेदिनी। ज्ञातं निश्चितम्॥

(१३) मनसानुभावित तीक्ष्णताबीजं वचसा प्रकाशयति अद्यापीति। हे मन्मथ हरस्य शम्भोः कोपवह्निः क्रोधोद्भूतकपालनेत्रानलः अम्बुराशौ समुद्रे। वारिराशिरब्धाविति महाब्धि। और्वो वाडवानल इव। और्वस्तु वाडवो वडवानल इत्यमरः। नूनं निश्चितमद्यापि त्वयि ज्वलति न निर्वाणतां गत इत्यर्थः। अन्यथा तस्य निर्वाणे भस्मावशेषो यस्य स तथोक्तस्त्वं मम विधा प्रकारो येषां ते तथाभूतानां ईप्सितप्रियासमागमानामिति यावत् अस्मभ्यं कथमेवमित्थमुष्णः। विधा विधौ प्रकारे चेत्यमरः। अत्रोष्णतया वह्निमत्त्वसाधनात् मन्मथे हरकोपानलज्वलनसद्भावानुभवरूपवैचित्र्यमानादनुमानमलङ्कारः। यदुक्तं दर्पणे। अनुमानन्तु विच्छित्त्या ज्ञानं साध्यस्य साधनादिति। विच्छित्तिरलङ्कारान्तरसत्त्वे चित्रम्। वृत्तमिदमुपजातिर्नाम॥

(१४) अधुना वञ्चकतां दर्शयितुमाह अपि चेति। त्वया मन्मथेन चन्द्रमसा इन्दुना च अतिविश्वसनीयाभ्यामतिशयविश्वसनीयाभ्यां द्वाभ्यां कामिना प्रियाभिलाषिणां सार्थं

तव कुसुमशरत्वं शीतरश्मित्वमिन्दो-
र्द्वयमिदमयथार्थं दृश्यते मद्विधेषु।
विसृजति हिमगर्भैरग्निमिन्दुर्मयूखै-
स्त्वमपि कुसुमबाणान् वज्रसारीकरोषि॥ (१५)

अथवा। (१६)

अनिशमपि मकरकेतुर्मनसो रुजमावहन्नभिमतो मे।
यदि मदिरायतनयनां तामधिकृत्य प्रहरतीति॥ (१७)

भगवन्नेवमुपालब्धस्य ते न मां प्रत्यनुक्रोशः। (१८)

---

मह्नु। छन्दभेदा समे येषां मह्नुमार्याँ तु जन्तुभिरित्यमरः। अभिसन्धीयते प्रतार्यते। वञ्चनत्वाभिसन्धानं व्यलीकञ्च प्रतारणमिति हेमचन्द्रः॥

(१५) तवेति। तव मन्मथस्य कुसुमशरत्वं कुसुमशरत्वं तथा इन्दोश्चन्द्रस्य शीतरश्मित्वं शीतरश्मिनामधेयत्वं इदं द्वयं मद्विधेषु कामिजनेषु अयथार्थं अर्थमतिक्रान्तं दृश्यते तथाहि इन्दुश्चन्द्रमा हिमानि तुषाराः गर्भे अभ्यन्तरे येषां ते तथोक्तैः मयूखैः रश्मिभिरग्निं विसृजति विकिरति। तथाच शीताः शीतलाः रश्मयः किरणाः यस्य स शीतरश्मिरित्यर्थो न सम्भवतीति भावः। तथा च मन्मथोऽपि कुसुमबाणान् पुष्पतया दृश्यमानान् शरान् वज्रादपि सारो बलं येषां ते वज्रसाराः। सारो बले स्थिरांशे चेत्यमरः। अवज्रसारान् वज्रसारान् करोषि। चि अभूततद्भावे इति चि। ईकारश्च पूर्वोकारस्य। यतस्तु कुसुमानि शरा यस्य स इत्यर्थो न युज्यते वज्रशरत्वस्यैव युक्तत्वादिति भावः। अत्रापह्नुतिरलङ्कारः। यदुक्तं दोहाहरणं दर्पणे। अपह्नुतिरपह्नुत्य किञ्चिदन्यार्थदर्शनम्। न पञ्चेषुः स्मरस्तस्य सहस्रं पत्रिणामिति। चन्द्रिका चन्दनं मन्दो गन्धवाहश्च दक्षिणः। वियमग्निमयी दृष्टिः शीता किल शरान् प्रति। ये विप्रयुक्ता मेलेव परेभ्यः कामिनाम्। औष्ण्यप्रदर्शनात् अस्य शैत्यापह्नुतिरिति। इदं मालिनी नाम वृत्तम्॥

(१६) निन्दितामपि अरक्रियां कथञ्चिदभिनन्दयन्नाह अथवेति॥

(१७) अनिशमिति। मकरकेतुः कामो मदिरे मत्तखञ्जनाविव आयते दीर्घे नयने यस्याः सा तथोक्ताम्। मदिरा मत्तखञ्जन इति शब्दरत्नावली। तां शकुन्तलामधिकृत्य लक्ष्यीकृत्य यदि प्रहरति इति एव स्यात् तदा अनिशं सततं मनसो रुजं पीडामावहन् जनयन्नपि मे अभिमतः सम्मतः स्यादिति शेषः। अभिमत इति ज्ञानार्थत्वाद् वर्तमाने क्तः॥

(१८) भगवन्निति। उपालब्धस्य दूषितस्य। दूषितं स्यादुपालब्धमित्युक्तं च स्मृतिपूर्वकम्। मोक्षस्थलन मनिन्दनं यत्तत्र परिभाषणमिति जटाधरः। अनुक्रोशो दया। कृपा दयानुकम्पा स्यादनुक्रोशोऽपीत्यमरः॥

इत्थैव सङ्कल्पशतैरजस्रमनङ्ग नीतोऽसि मयातिवृद्धिम् ।
आकृष्य चापं श्रवणोपकण्ठे मय्येव युक्तस्तव बाणमोक्षः ॥(१९)

सखेदम् ॥ परिक्रम्य ॥ क्व नु खलु निरस्तविघ्नैस्तपस्विभिरनुज्ञातः खिन्नमात्मानं विनोदयामि न च प्रियादर्शनादृते शरणमन्यत् यावदेनामन्विष्यामि । (२०)

ऊर्ध्वमवलोक्य ॥ इमामुग्रतपां वेलां प्रायेण लतावलयवत्सु मालिनीतीरेषु ससखीजना तत्रभवती शकुन्तला गमयति भवतु तत्रैव तावद् गच्छामि । (२१)

परिक्रम्यावलोक्य च ॥ अनया बालपादपवीथ्या सुतनुरचिरं गतेति तर्कयामि । कुतः । (२२)

---

(१९) इत्थैवेति । हे अनङ्ग सङ्कल्पशतैः प्रियामधिकृत्य मानसकर्मशतैः करणैः । सङ्कल्पः कर्म मानसमित्यमरः । अजस्रमनिशं इत्थैव निरर्थकमेव मया त्वमतिवृद्धिमतिविपुलतां नीतो गमितोऽसि श्रवणोपकण्ठे कर्णान्तिके । उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययमित्यमरः । चापं धनुराकृष्य मय्येव तव बाणमोक्षः शरविक्षेपो युक्त उचितः । अत्र स्वपरिवर्द्धितस्य तदुपकृतिरेवोचिता क्रिया तत्र बाणमोक्षस्त्वपकारकत्वेन विसदृशो भवतीति विषमाख्योऽलङ्कारः । यदुक्तं चन्द्रालोके । विरूपकार्यस्योत्पत्तिरपरं विषमं मतमिति । वृत्तमुपजातिर्नाम ॥

(२०) सखेदमिति । शोचनापमित्यर्थः । अतएव खिन्नध्यौ दैन्यके इति कविकल्पद्रुमव्याख्याने दैन्यकर्तृपतप्तीभाव इति भावदीपिका । नु वितर्के । खलु जिज्ञासायाम् । निरस्ता निवारिता विघ्ना येषां ते तथोक्तैस्तपस्विभिरनुज्ञातोऽनुमतोऽहं क कस्मिन् प्रदेशे खिन्नमुपतप्तमात्मानं विनोदयामि आनन्दयामि । प्रियादर्शनादृते शकुन्तलादर्शनमन्तरेण । ऋते विनान्तरेणार्थे इत्यमरः । अन्यारादितरर्त्तेति ऋतेयोगे पञ्चमी । अन्यत् शरणं रक्षि न नास्तीत्यर्थः ॥

(२१) ऊर्ध्वमिति । ऊर्ध्वमवलोक्य उन्मुखीभूय । उग्रमुत्कटं तपतीत्युग्रतपा तां माध्यन्दिनीमिति यावत् । प्रायेण बाहुल्येन कादाचित्काभावेनेति भावः । लतावलयवत्सु लतामण्डपवत्सु । मालिन्या सरितस्तीरेषु तटभूमिषु वर्त्तन्त इति शेषः । गमयति यापयति वेलामित्यनेन सम्बन्धः ॥

(२२) परीति । बालपादपानामल्पाल्पतरूणां या वीथ्या पङ्क्त्या । वीथ्यालिरावलि

सम्मीलन्ति न तावद् बन्धनकोषास्तयावचितपुष्पाः ।
घोरस्निग्धाश्चामी दृश्यन्ते किसलयच्छेदाः ॥ (२३)

स्पर्शं रूपयित्वा ॥ अहो प्रवातसुभगोऽयं वनोद्देशः । (२४)

शक्योऽरविन्दसुरभिः कणवाही मालिनीतरङ्गाणाम् ।
अङ्गैरनङ्गतप्तैर्निर्दयमालिङ्गितुं पवनः ॥ (२५)

विलोक्य ॥ हन्तास्मिन् वेतसलतामण्डपे सन्निहितया शकुन्तलया भवितव्यम् । तथाहि । (२६)

अभ्युन्नता पुरस्तादवगाढा जघनगौरवात् पश्चात् ।
द्वारेऽस्य पाण्डुसिकते पदपङ्क्तिर्दृश्यतेऽभिनवा ॥ (२७)

---

पङ्क्तिः श्रेणी अस्यास्तु राजते इत्यमरः । तदनुगतमार्गेणैति यावत् । ततस्तु शकुन्तला । अचिरमत्र भवितव्यम् । अचिरगमनार्थे वेत्तुमुत्थापयति श्रुत इति ॥

(२३) सम्मीलन्तीति । तया शकुन्तलया अवचितानि चयनीकृतानि कुसुमानि पुष्पाणि येभ्यस्ते तथोक्ता बन्धनकोषाः पुष्पमूलबन्धनजनकाः कोषाकारास्ते सम्मीलन्ति मुद्रां यान्ति चिरप्रयाणे तु ते सम्मीलिष्यन्त्येवेति भावः । तथा चामी किसलयानां पल्लवानां छेदाः खण्डानि च । छेदः खण्डोऽस्त्रियामिति लिङ्गाद्यसंग्रहः । क्षीरेण प्रसवभङ्गप्रवृत्तनिर्यासेन स्निग्धाः मसृणा दृश्यन्ते । इयमार्या ॥

(२४) स्पर्शमिति । रूपयित्वा तथा कृत्वा । प्रवातेति । प्रवातेन शैत्यसौगन्ध्यमान्द्यात्मकगुणत्रयशालिना वातेन सुभगः सुन्दरः । सुन्दरेऽधिकभाग्ये च दुर्हिनेतरवासरे । सुरीयार्थे श्रीमति च सुभग इति शब्दार्णवः । वनोद्देशो वनप्रदेशः ॥

(२५) वातस्य शैत्यादिगुणान् दर्शयति शक्य इति । अरविन्दैरम्भोरुहैः सुरभिः सुगन्धिः । सुगन्धौ च मनोज्ञे च वाच्यवत् सुरभिः स्मृत इति विश्वः । एतेन सौगन्ध्यं दर्शितम् । तथा मालिन्यास्तरङ्गाणामूर्मीणां कणानम्बुकणान् वहतीति कणवाही । लवलेशकणाण्वः इत्यमरः । एतेन शैत्यं दर्शितम् । पवनो वायुः अनङ्गतप्तैर्मदनदाहपरिखिन्नैः अङ्गैरवयवैः निर्दयं गाढमालिङ्गितुं शक्यः । अत्र निर्दयमित्यनेन मान्द्यं ख्यापयति । इयमार्या ॥

(२६) विलोक्येति । हन्तकारो हर्षं द्योतयति । शकुन्तलया अस्मिन् वेतसलताभिः वानीरतरुलताभिः लताभिर्मण्डपे लतागृहभूते सन्निहितया अवस्थितया भवितव्यम् । भावे तव्य । उक्तं प्रमापयितुमाह तथाहीति ॥

(२७) अभ्युन्नतेति । पुरस्तादग्रतोऽभ्युन्नता उच्चा तथा जघनयोः कटिदेशपुरो

यावद् विटपान्तरेणावलोकयामि । (२८)

तथा कृत्वा सहर्षम् ॥ अये लब्धं नेत्रनिर्व्वाणम् । एषा मनोरथप्रिया मे सकुसुमास्तरणं शिलापट्टमधिशयाना सखीभ्यामुपास्यते । भवतु लताव्यवहितः शृणोमि विस्रब्धकथितान्यासाम् ॥ इति विलोकयन् स्थितः । (२९)

॥ ततः प्रविशति यथोक्तव्यापारा सह सखीभ्यां शकुन्तला ॥ (३०)

सख्यौ ॥ उपवीज्य ॥ हला सउन्तले अवि सुहाअदि दे णलिणीवत्तवादो । (३१)

शकु ॥ सखेदम् ॥ किं वीजअन्ति मं पिअसहीओ । (३२)

सख्यौ ॥ सविषादं परस्परमवलोकयतः । (३३)

राजा ॥ बलवदस्वस्थशरीरा तत्रभवती दृश्यते । (३४)

---

भागयो र्गौरवात् भारात् । पश्चान्नितम्ब स्त्रीकट्याः क्लीवे जघनं पुर इत्यमरः । पश्चात् गुरुनिपातम् असौ अवगाढा निम्ना अभिनवा अचिरभूता पदपङ्क्तिः पादचिह्नावली । पदं शब्दे च वाक्ये च व्यवसायपदेशयोः । पादतच्चिह्नयोः स्थानत्राणयोरङ्कवस्तुनोरिति मेदिनी । अस्य लतावृतस्य मण्डपस्य पाण्डुर पाण्डुरवर्णा सिकता बालुका यस्मिन् तत्र तयोर्द्वारे दृश्यते । इत्यन्वयः ॥

(२८) यावदिति । विटपान्तरेण विटपानां पल्लवानामन्तरेण अवकाशेन ॥

(२९) तथेति । अये सम्भ्रमे । नेत्रनिर्व्वाणं नयनयोस्तापशान्तिः । मनोरथस्य अभिलाषस्य प्रिया प्रीतिकरी । यस्यामभिलाषोऽविरतं रमत इति भावः । सकुसुमास्तरणं कुसुमशय्यासहितम् । शिलापट्टं पाषाणफलकम् । अथ पट्टः स्यात् फलके न्यपासने इति त्रिकाण्डशेषः । अधिशीङ्स्थासामिति आधारस्याधिकरणस्य कर्म्म । उपास्यते शुश्रूष्यते । आसां शकुन्तलायास्तत्सख्योश्चेत्यर्थः ॥

(३०) तत इति । यथोक्तव्यापारा कुसुमशय्याधिशायिनी सखीभ्यामुपास्यमाना च ॥

(३१) सख्याविति । उपवीज्य अन्तिके वीजयित्वा । हलेत्यादि । अयि शकुन्तले अपि सुखयति ते नलिनीपत्रवातः । अपि प्रश्ने । सुखयति सुखं करोति । ते इति सम्बन्धमात्रविवक्षायां षष्ठी ॥

(३२) शकु इति । सखेदं सोपतापम् । किमित्यादि । किं वीजयतो मां प्रियसख्यौ ॥

(३३) सख्याविति । सविषादं अवसादेन सहितम् ॥

(३४) राजेति । बलवत् अतीव । बलवत् सुष्ठु किमुत स्वत्यतीव च निर्भरे इत्यमरः ।

सवितर्कम् ॥ तत् किमयमातपदोषः स्यात् उत यथा मे मनसि वर्त्तते । (३५)

साभिलाषं निर्वर्ण्य ॥ अथवा कृतं सन्देहेन । (३६)

> स्तनन्यस्तोशीरं प्रशिथिलमृणालैकवलयं
> प्रियायाः साबाधं तदपि कमनीयं वपुरिदम् ।
> समस्तापः कामं मनसिजनिदाघप्रसरयो-
> र्न तु ग्रीष्मस्यैवं सुभगमपराद्धं युवतिषु ॥ (३७)

---

अतुल्यशरीरा सन्तप्तशरीरा । अत्र दाहप्रशान्तिकरयोः कुसुमास्तरणनलिनीपत्रवातयोः सद्भावात् तापानुमानं तस्य च गौरववृद्धिः स्पर्शसुखाननुभवव्यक्तेः । कुसुमास्तरणादीनां दाहशान्तिकरत्वमाह सुश्रुतः । शीतं विमानमथ चन्द्रमसः प्रकाशं दाहप्रशान्तिकरमद्भि-मता नराणामित्युपक्रम्य—आसादयन् पवनमाहृतमिष्टगन्धकह्लारपद्मदलशैवलसङ्गमेभ्यः । शीतैः स्वमानपवने परिरभ्यमाणः शीतयरेत् अथ कामजदोषैः काङ्क्षति । तथा । नीलोत्पल-घनकुङ्कुमपद्मपत्रजालप्रलम्बप्रियकङ्करपुण्डरीके । प्रमाणगमनकस्योरशीतोपचारे तस्मिन् क्षणे कमलरेणुरुपे शयीतेति च ॥

(३५) सवितर्कमिति । किमेतदुतैवमिति तत्त्वानुसन्धानं वितर्कः । तत् तावत् । अयं सन्ताप । आतपदोषः आतपोपजनितविकारवस्तुत्वं । उतो विकल्पे अथवेत्यर्थः । उताप्यर्थे विकल्पयोरित्यमरः । मनसि यथा वर्त्तते यथानुभवामि च इत्येवार्थः । स्मरसन्ताप इति भावः ॥

(३६) साभिलाषमिति । निर्वर्ण्य स्थिरमवलोक्य । निर्वर्णनं तु निध्यानं दर्शना लोकनेक्षणमित्यमरः । कृतं अलम् । कृतं युगे ऽलमर्थे चेति मेदिनी । सन्देहेनेति वारणार्थेन योगे तृतीया ॥

(३७) स्तनेति । प्रियायाः शकुन्तलाया इदं वपुः शरीरं स्तनयोर्न्यस्तं दत्तमुशीरं वीरणमूलानुलेपनं यस्य तत् तथोक्तं तथा प्रशिथिलं श्लथभूतं मृणालस्य एकवलयं यत्र तत् तथोक्तम् । शिथिलं श्लथः श्लथ इति शब्दरत्नावली । अतएव साबाधं आबाधया सम्यक्-पीडया सह वर्त्तमानं तदपि तथापि कमनीयं मनोज्ञम् । मनसिजस्य कामस्य निदाघस्य ग्रीष्मस्य च प्रसरयोर्वेगयोस्तापो दाहः समः । तथाच गरुडपुराणम् । कामाद्भ्रमोऽरुचि-र्दाहो ग्लानिर्निद्राभीष्टनिश्चय इति । कामं स्यादस्तु । अकामानुमतौ काममित्यमरः । किन्तु युवतिषु यौवनवतीषु विषयेषु ग्रीष्मस्य अपराद्धं सन्तापदानापराध एव सुभगमित्थं सुचारु वपुःकमनीयताकरमिति यावत् । न भवतीत्यर्थः । अतो मनसिजदाह एवायमिति भावः । इदं शिखरिणी नाम वृत्तम् ॥

प्रिय ॥ जनान्तिकम् ॥ अणसूए तस्स राएसिणो पढमदंसणादो आरम्भिअ पज्जुस्सुअमणा सउन्तला ण क्खु से अण्णणिमित्तो आतङ्को भवे । (३८)

अन ॥ सहि मम वि एआरिसी आसङ्का हिअअस्स होदु पुच्छिस्सं दाव णं । (३९)

प्रकाशम् ॥ सहि पुच्छिदव्वासि किम्पि बलीओ क्खु दे अङ्गाणं सन्दावो । (४०)

राजा ॥ वक्तव्यमेव । (४१)

शशिकरविशदान्यस्यास्तथापि दुःसहनिदाघशंसीनि ।
भिन्नानि श्यामिकया मृणालनिर्माणवलयानि ॥ (४२)

शकु ॥ पूर्वार्द्धेन शयनादुत्थाय ॥ हला भण जं वत्तुकामासि । (४३)

---

(३८) प्रियमिति । जनान्तिकमप्रकाशम् । तत्प्रकारस्तु पूर्वं दर्शितः । अणे त्यादि । अनसूये तस्य राजर्षेः प्रथमदर्शनादारभ्य पर्य्युत्सुकमना शकुन्तला, न खल्वस्या अन्यनिमित्त आतङ्को भवेत् । प्रथमदर्शनादित्यत्र ल्यब्लोपे पञ्चमी । पर्य्युत्सुकमना उत्कण्ठितमना । अन्यन्निमित्तं हेतुर्यस्य सोऽन्यनिमित्तः । आतङ्कस्तापः । रुक्तापशङ्का स्वातङ्क इत्यमरः ॥

(३९) अनेति । सहीत्यादि । सखि ममाप्येतादृशी आशङ्का हृदयस्य, भवतु प्रक्ष्यामि तावदेनाम् । आशङ्का संशयारोपः । एनां शकुन्तलाम् ॥

(४०) प्रकाशमिति । सहीत्यादि । सखि प्रष्टव्यासि किमपि बलीयान् खलु ते अङ्गानां सन्तापः । अतिशयेन बलवानिति बलीयान् । तुल्यबहिनामिमीयसौ मतो लोपः । अम् प्रत्ययः ॥

(४१) राजेति । वक्तव्यं वचनार्हम् । बलीयानित्यादीति शेषः ॥

(४२) अङ्गसन्तापबलीयस्त्वस्य वचनार्हतां साधयति शशीति । तथाहि शशिनः चन्द्रस्य करा इव विशदानि शुभ्राण्यपि अस्याः शकुन्तलायाः मृणालनिर्माणवलयानि मृणालनिर्मितवलयानि । कर्म्मधारयः । श्यामिकया तापोपजनितकालिम्ना भिन्नानि विविदानि सन्ति दुःसह सन्तापं यत्र निदाघमुत्पाद्य शंसन्ति कथयन्तीति दुःसहनिदाघशंसीनि भवन्तीति शेषः । भेदो द्वैधे विशेषे च उपजापे विदारणे इति विश्वः । इयमार्य्या ॥

(४३) शक्विति । पूर्वार्द्धेन ऊर्द्धकायभागेन । शयनात् शय्यातः । यथार्थं

अन॥ हला सउन्तले अलब्भन्तरा अह्मो दे मणोगदस्स वुत्तन्तस्स किन्तु जादिसो इदिहासकथाणुबन्धेसु कामिअणाणं अवत्था सुणीअदि तादिसो तुह त्ति तक्केमि ता कधेहि किं णिमित्तं दे अअं आआस त्ति विआरं परमत्थदो अआणिअ अणारम्भो किल पदीआरस्स (४४)

राजा॥ अनसूययापि मदीयस्तर्कोऽवगतः। (४५)

शकु॥ बलीओ मे आआसो ण सक्कणोमि सहसा णिवेदिदुं। (४६)

प्रिय॥ सुट्ठु क्खु एसा भणादि किं एदं अत्तणो उवद्दवं णिगूहसि अणुदिअसं क्खु परिहीअसि, अङ्गेसुं लावण्णमई छाया केवलं तुमं ण मुञ्चदि। (४७)

---

गमनीयम्। द्युयमित्यमरः। हलेत्यादि। अयि मध्य वद्, वल्गुकामासि। मध्य वद। वल्गु कामोऽभिलाषो यस्याः सा वल्गुकामा॥

(४४) अनेति। हलेत्यादि। अयि शकुन्तले अलब्धान्तरा वयं ते मनोगतस्य वृत्तान्तस्य किन्तु यादृशी इतिहासकथानुबन्धेषु कामिजनानामवस्था श्रूयते तादृशी तवेति तर्कयामि। तत कथय किं निमित्तं ते अयमायास इति। विकारं परमार्थतोऽज्ञात्वा अनारम्भ किल प्रतीकारस्य। अलब्धान्तरा अनवगतविशेषा। इतीति। इतिहासकथानां पुरावृत्तकथानामनुबन्धेषु अभिवर्त्तनेषु प्रसिद्धिरिति यावत्। हेतोरुत्पादेऽनुबन्ध स्यात् प्रकृत्या दिषु नश्वरे। शुश्रूषानुयायिनि शिशौ प्रकृतस्याभिवर्त्तने इत्यमरः। कामिजनानामनङ्गदशाप्राप्तजनानाम्। अवस्था कालिको विशेषः। विशेष कालिकोऽवस्था इत्यमरः। किं निमित्तं किमर्थम्। त्वादयोऽर्थाधिकर्मे स्येत्सु सर्वा इति प्रथमा। निमित्तशब्दोऽत्र प्रयोजनपरः। आयास श्रमः। विकार रोगम्। विकारो विकृतो रोगेऽपीति विश्वः। परमार्थतस्तत्त्वतः। प्रतीकारस्य चिकित्सायाः। अनारम्भ किल आरम्भो न स्यादेव। किल-शब्दो निश्चये॥

(४५) राजेति। मदीयस्तर्कः अयं या आरसनाय इत्येवरूप॥

(४६) शकु इति। बलीत्यादि। बलीयान् मे आयास न शक्नोमि सहसा निवेदयितुम्। आयास श्रम। सहसा अतर्कितम्। अतर्किते तु सहसेत्यमरः॥

(४७) प्रियमिति। सुट्ठु इत्यादि। सुष्ठु खल्वेषा भणति किमेतमात्मन उपद्रवं निगूहसि अनुदिवसं खलु परिहीयसे। अङ्गेषु लावण्यमयी छाया केवलं त्वां न मुञ्चति। एषा अनसूया। किं कथम्। उपद्रवं विकारम्। निगूहसि गोपायसि। अनुदिवसं प्रत्यहम्। परिहीयसे रसादिभि धातुभि संत्यज्यसे। लावण्यमयी सौकुमार्यप्रयुक्तेषु छायाया-

राजा ॥ अवितथमाह प्रियंवदा । तथाहि । (४८)

क्षामक्षामकपोलमाननमुरः काठिन्यमुक्तस्तनं
मध्यः क्लान्ततरः प्रकामविनतावंसौ छविः पाण्डुरा ।
शोच्या च प्रियदर्शना च मदनग्लानेयमालक्ष्यते
पत्राणामिव शोषणेन मरुता स्पृष्टा लता माधवी ॥ (४९)

शकु ॥ निश्वस्य ॥ कस्स वा अण्णस्स कधइस्सं किन्तु आआसइत्तआ वो भविस्सं । (५०)

---

सारल्यमित्यमरः । प्रतिभाति यदङ्गेषु तच्छायाप्रमिक्षोऽस्त इवाभ्यन्तरलोलमपिदर्शित-लावण्यम् । छाया कान्तिः । छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातप इत्यमरः । सुष्ठुति जहाति ॥

(४८) राजेति । अवितथं सत्यम् । आह यदुदितवं परिहीयत इतीति शेषः । दर्शादियोगं दर्शयितुमाह तथाहीति ॥

(४९) क्षामेति । आननं मुखं यस्या इत्यादिः । क्षामक्षामावतिक्षीणौ कपोलौ गण्डौ यत्र तत् तथोक्तम् । तथा उरो वक्षः काठिन्येन कठिनभावेन मुक्तौ परित्यक्तौ स्तनौ यत्र तत् तथोक्तम् । यतदुहितयेन धातुक्षयारम्भो दर्श्यते । तथा मध्यो मध्यावयवः क्लान्ततरोऽतिदुर्बलः । तथा अंसौ भुजौ प्रकामविनतौ अतीवावनतौ । अयम्यो स्कन्धा-लोका । तथा छविः द्युतिश्च पाण्डुरा पाण्डुवर्णा अतएव पत्राणां शोषणेन शोषकेन पाण्डुरी-कारकेणेति यावत् । नभ्यादित्वाद्गुणः । मरुता दक्षिणानिलेन स्पृष्टा माधवीलतेव शोच्या शोचनीया तथा प्रियं प्रीतिकरं दर्शनं यस्याः सा तथोक्ता च इयं शकुन्तला मदनग्लाना कामविकला आलक्ष्यते निश्चीयते । ग्लानग्लास्नू आमयावी विकृतो व्याधितोऽपटुरित्यमरः । एतेन शोकयोर्निर्गतेति सुस्पष्टं दर्शितम् । यथाह सुश्रुतः । व्यवायशोषी शुक्रस्य क्षय-लिङ्गैरुपद्रुतः । पाण्डुदेहो यथापूर्वं क्षीयन्ते चास्य धातवः । प्रध्यानशीलः स्रस्ताङ्गः शोक-शोष्यपि तादृशः । विना शुक्रक्षयकृतैर्विकारैरुपलक्षित इति । एतत्श्लोकस्य भावप्रका-शाभिमतः व्याख्याभिधीयते प्रध्यानशीलः ध्यानभावेन शोको अभितप्तादृध्यानपरः । स्रस्ताङ्ग-मिति शिथिलाङ्गः । तादृशः पूर्वोक्तव्यवायशोषिसदृशः । तेन पाण्डुदेहः सर्वधातुक्षययुक्तो भवति परं शुक्रक्षयकृते विकारे मेढ्रवृषणवेदनादिभिर्विक्लिन्नो भवति व्याधिस्वभावादिति ॥

(५०) शकु इति । निश्वस्य दीर्घं श्वसिति शेषः । कस्सेत्यादि । कस्य वा अन्यस्य कथयिष्यामि । किन्तु आयासहेतुका वो भविष्यामि । अन्यस्येत्यत्र सम्बन्धविवक्षायां षष्ठी । युष्मत्समक्षमेव कथयिष्यामीति भावः । आयासहेतुका दुःखहेतुः ॥

उभे ॥ दिट्ठिआ दे अणुरूए वरे अहिलासो, अधवा साअरं उज्झिअ कहिं महाणईए पविसिदव्वं । (५६)

राजा ॥ सहर्षम् ॥ श्रुतं यच्छ्रोतव्यम् । (५७)

स्मर एव तापहेतुर्निर्वापयिता स एव मे जातः ।
दिवस इवाभ्रश्यामस्तपात्यये जीवलोकस्य ॥ (५८)

शकु ॥ ता जइ वो अणुमदं तदो तधा पवत्तिदव्वं जधा तस्स राएसिणो अणुकम्पणीआ होमि त्ति अण्णधा सुमरेध मे । (५९)

राजा ॥ अहो विमर्शच्छेदि वचनम् एतदेव कामफलं यत्फलमन्यत । एतावदवस्थापि मा सुखयति । (६०)

---

स्यामि सखा । तं राजर्षिं गतं प्राप्तस्तत्तेनाभिलाषेण मम स्पृहया हेतुना एतावतीं दयनीं अवस्थां इयं यस्याः सा तथाभूतास्मि ॥

(५६) उभे इति । दिट्ठिआ इत्यादि । दिष्ट्या ते अनुरूपे वरेऽभिलाषः । अथवा सागरमुज्झित्वा कुत्र महानद्या प्रवेष्टव्यम् । दिष्ट्यानन्दसूचकम् । दिष्ट्या समुपजोषमित्यानन्द इत्यमरः । यद्वा दिष्ट्या भाग्यात् ते तव अनुरूपे तुल्यरूपे वरे वरणीये पात्रे अभिलाषो जात इति शेषः । न चेत् महान् प्रमादोऽभविष्यदिति भावः । दिष्ट्या कर्मे शुभे भाग्ये इति शब्दाब्धिः । विपर्यये अथवेति । महानद्या गङ्गया । तथापि युवां एव अयोग्यमभिलषतीति भावः ॥

(५७) राजेति । यत् श्रोतव्यं श्रवणीयमतीवश्रुतिसुभगमिति यावत् तत् श्रुतम् ॥

(५८) स्मर इति । स्मरः काम एव मे तापहेतुः दाहहेतुः । उक्तं हि गरुडपुराणे । कामाद् भ्रमोऽरुचिः दाहो ह्रीनिद्राधीधृतिक्षय इति । स एव स्मर एव मे निर्वापयिता तापोपशमयिता जातः । प्रियाचेतसि गतः स्थित इति शेषः । यथा तापहेतुर्दिवस एव तपात्यये निदाघावसाने । निदाघ उष्णोपगम उष्ण उष्मागमस्तप इत्यमरः । अभ्रैः मेघैः श्यामोऽसितः सन् जीवानां जीवतां लोकस्य भुवनस्य भुव इति यावत् निर्वापयिता जायते तद्वेत्यन्वयः । इत्यार्था ॥

(५९) शकु इति । तेत्यादि । तद् यदि वोऽनुमतं ततस्तथा प्रवर्तितव्यं यथा तस्य राजर्षेरनुकम्पनीया भवामीति । अन्यथा स्मरत माम् । तत् तस्मात् । तथा प्रवर्तितव्यं तथा यतितव्यम् । किमित्याह यथेत्यादीत्यन्तम् । अन्यथा तदकरणे । मां स्मरत यूयं मृतिमार्गं यास्यन्तीं अहं जीवलोकं त्यक्ष्यामीति भावः ॥

(६०) राजेति । विमर्शच्छेदि निश्चयविषयकविभ्रमं निवारयतीत्यर्थः किमिव निश्चयेन

प्रिय ॥ जनान्तिकम् ॥ अणसूए दूरगदो से मणोरहो अक्खमा इअं कालहरणस्स । (६१)

अन ॥ पिअम्वदे को णु उवाओ भवे जेण अविलम्बिदं णिहुदञ्च सहीए मणोरहं सम्पादेह्म । (६२)

प्रिय ॥ णिहुदं त्ति चिन्तणीअं सिग्घं त्ति ण दुक्करं । (६३)

अन ॥ कधं विअ । (६४)

प्रिय ॥ णं सो वि राएसी इमस्सिं जणे सिणिद्धदिट्ठिआ सूइदाहिलासो इमेसुं दिअहेसुं पजाअरकिसो विअ लक्खीअदि । (६५)

---

भविष्यति उत सानुरागापि गुरुजनानुमतिमपेक्षिष्यते इत्येव वितर्कस्यापि नावसर इति भावः । वितर्कं स्यादुभयत्र परामर्शो विमर्शनम् । अध्याहारस्तर्क ऊह इति हेमचन्द्रः । एतदेव एततपर्यन्तं कामफलं कामसाध्यं नान्यतोऽन्यत् परिणयनादिकं कामेन साध्यते इत्यर्थः । तदा तत् किंसाध्यमित्यत आह यत्नेति । अन्यत परिणयनादिकं यत्नफलं यत्नसाध्यम् । तथाच येन येन विना यत्नाय प्रवृत्ति र्नोचितेन कामेन तत्किमादितमधुनास्माभिः समागमाय यतितव्यमिति भावः । एतादृशस्यापि शोकशोणायस्यापि । का दूषयति अनुरागोत्कारादिति भावः ॥

(६१) प्रियमिति । जनान्तिकमप्रकाशम् । त्रिपताककरेण व्यवधायेति यावत् । अणे त्यादि । अनसूये दूरगतोऽस्या मनोरथ, अक्षमेयं कालहरणस्य । अस्याः सख्याः मनोरथोऽभिलाषो दूरगमनासन्नं राजानमिति यावत् गतो विषयीचकार । अत इयं कालहरणस्य कालक्षेपणस्य अक्षमा असहा । अत एव तदासादनाय कालहरणमनुभवत्यसमर्थ्ये नेच्छिकेनेति भावः ॥

(६२) अनेति । पिअम्वदे इत्यादि । प्रिय वदे को नु उपायो भवेत येनाविलम्बित निभृतञ्च सख्या मनोरथ सम्पादयाम । नु प्रश्ने । भवेदिति प्रश्ने लिङ् । येन उपायेन । अविलम्बितं शीघ्रम् । निभृतं निर्जनम् । सम्पादयाम सफलीकुर्मः ॥

(६३) प्रियमिति । णिहुदमित्यादि । निभृतमिति चिन्तनीयं शीघ्रमिति न दुष्करम् । निभृतमिति । निभृत सम्पादन चिन्तनीय विचारणीयम् । शीघ्रमिति । शीघ्र सम्पादनं न दुष्करमनायाससाध्यम् ॥

(६४) अनेति । कधं विअ कथमिव । कीदृगित्यर्थः ॥

(६५) प्रियमिति । णमित्यादि । ननु सोऽपि राजर्षिरस्मिन् जने स्निग्धदृष्टा सूचिताभिलाष एषु दिवसेषु प्रजागरकृश इव लक्ष्यते । ननुरनुनये । अस्मिन् जने

अन॥ सहि रोअदि मे सुउमारो एसो पओओ किं वा सउन्तला भणादि। (६९)

शकु॥ सहीणिओओ वि विकप्पीअदि। (७०)

प्रिय॥ तेण हि अत्तणो उवण्णासाणुरूअं चिन्तेहि ललिदपदावलिबन्धं गीदिअं। (७१)

शकु॥ चिन्तेमि किन्तु अवहीरणाभीरुअं वेवदि मे हिअअं।(७२)

राजा॥ विहस्य॥ (७३)

अयं स ते तिष्ठति सङ्गमोत्सुको विशङ्कसे भीरु यतोऽवधीरणाम्।
लभेत वा प्रार्थयिता न वा श्रियं श्रिया दुरापः कथमीप्सितो भवेत्॥(७४)

---

स्त्रियः सुमनसः पुष्पमित्यमरः। देवताशेषापदेशेन आभिः सुमनोभिरर्चनीयदेवोऽभ्यर्च्यतामिति छलेन॥

(६९) अनेति। सहीत्यादि। सखि रोचते मे सुकुमार एष प्रयोगः किं वा शकुन्तला भणति। रोचते प्रीतिमुत्पादयति। मे मह्यम्। रुच्यर्थानां प्रीयमाण इति चतुर्थी। सुकुमारो मृदुः अनतिप्रगल्भ इति यावत्। प्रयोगः प्रयुक्तिः। शकुन्तलासम्मत्यर्थमाह शकुन्तलेत्यादि॥

(७०) शकु इति। सहीत्यादि। सखीनियोगोऽपि विकल्प्यते। अपि प्रश्ने। तथा च सखीनियोगः सख्याः प्रयोगः किं विकल्प्यते द्वैधीक्रियते अपि तु नेत्यर्थः॥

(७१) प्रियमिति। तेणेत्यादि। तेन हि आत्मन उपन्यासानुरूपां चिन्तय ललितपदावलिबन्धां गीतिकाम्। उपन्यासानुरूपां प्रथमकथनोपयुक्ताम्। उपन्यासस्तु वाङ्मुखमित्यमरः। ललितेति। ललिताभिर्मनोज्ञाभिः पदावलिभिः पदपङ्क्तिभिर्बन्धो रचना यस्याः सा ताम्॥

(७२) शकु इति। चिन्तेमीत्यादि। चिन्तयामि किन्तु अवधीरणाभीरुकं वेपते मे हृदयम्। अवधीरणा राज्ञोऽवज्ञा। अवधीरणं त्ववज्ञायामिति कविकल्पद्रुमः। वेपते कम्पते॥

(७३) राजेति। विहस्य मध्यमं हसित्वा॥

(७४) अयमिति। हे भीरु भयशीले। भियः क्रुक्लुकनौ इति भियः क्रुः। ऊतो-ऽयुङ् रज्ज्वादेरिति स्त्रियामूङ्। अम्बार्थनद्योर्ह्रस्व इति सम्बोधने ह्रस्वः। त्वं यत् पुरुषादवधीरणामवज्ञां विशङ्कसे आशङ्कयसि सोऽयं पुरुषस्ते तव सङ्गमे संयोगे उत्सुक उद्युक्तः सन् तिष्ठति तथाहि प्रार्थयिता श्रियोऽभिलाषी जनः श्रियं लक्ष्मीं लभेत वा न लभेत वा तत्रानियममिति भावः। ईप्सितः आप्तुमिष्टो जनः कथं श्रिया लक्ष्म्या दुरापो

अपि च । (७५)

अयं स यस्मात् प्रणयावधीरणामशङ्कनीयां करभोरु शङ्कसे ।
उपस्थितस्त्वां प्रणयोत्सुको जनो न रत्नमन्विष्यति मृग्यते हि तत् ॥(७६)

सख्यौ ॥ अङ्ग अत्तगुणावमाणिणि को णाम सन्दावणिव्वावणहेतुअं सारदीअं ज्योसं आदवत्तेण णिवारेदि । (७७)

शकु ॥ सस्मितम् ॥ णिओइदाह्मि ॥ इत्युपविश्य चिन्तयति । (७८)

राजा ॥ स्थाने खलु विस्मृतनिमेषेण चक्षुषा प्रियामवलोकयामि । यतः । (७९)

---

दुरासदो भवेत् कथमपि नेतव्यं । अनर्घं वज्रमात् स्थियेति न वशो । अत्र सुस्पष्टवस्तुन प्रतिबिम्बनाद् दृष्टान्तोऽलङ्कार । वंशस्थविलम्बितम् । उत्तरत्रापि ॥

(७५) दृष्टान्तान्तरप्रदर्शनाय पुनर्वक्तुमाह अपि चेति ॥

(७६) अयमिति । करभस्य करिशिशोरूरू इव ऊरू यस्याः सा करभोरू । वाम-लक्षणे रूत्रुपमानात् स्त्रियामूङ् । उपमानपदलोप । करभः करिशावक इत्यमरः । हे करभोरु अशङ्कनीयामसम्भावनीयां प्रणयस्य मत्कृतप्रार्थनस्य अवधीरणामवज्ञाम् । प्रणया स्नेहे । विश्रम्भयाच्ञाप्रेमाणः इत्यमरः । यस्मात् जनात् शङ्कसे सोऽयं जनः प्रणयोत्सुकः प्रार्थनोद्यतः सन् त्वामुपस्थितस्त्वत्समीपमागतः । तथाहि रत्नं महार्घो मणिः नान्विष्यति आत्मीकर्तुं लोकान् न मार्गयति तद् रत्नं मृग्यते लोकैः लोकैरन्विष्यते । अत्रापि दृष्टान्तोऽलङ्कारः ॥

(७७) सख्याविति । अङ्ग इत्यादि । अयि आत्मगुणावमानिनि को नाम सन्ताप-निर्वापणहेतुकां शारदीं ज्योत्स्नामातपत्रेण निवारयति । अयि सम्बोधने । अयि प्रश्नानुनययो क्रोधे सम्बोधनेऽपि चेति मेदिनी । आत्मनो गुणान् रूपादीन् अवमन्यतेऽवजानाति आत्म-गुणावमानिनी । रूपादिगुणसम्पन्नाया अपि राज्ञोऽवधीरणाभीरुत्वादिति भावः । आत-पत्रेण छत्रेण । छत्रमातपत्रमित्यमरः ॥

(७८) शकु इति । सस्मितं समन्दहासम् । णिओ इत्यादि । नियोजितास्मि । नियोजिता अर्पिता ॥

(७९) राजेति । स्थाने युक्तम् । युक्ते द्वे साम्प्रतं स्थाने इत्यमरः । विस्मृतो निमेषो यस्य तत्तेन निर्निमेषेणेति यावत् चक्षुषा यदवलोकयामि तद् युक्तमितरार्थः । निमेष विस्मरणोचितं दर्शयितुमाह यत इति ॥

18 उन्नमितैकभ्रूलतमाननमस्याः पदानि रचयन्त्याः।
पुलकाञ्चितेन कथयति मय्यनुरागं कपोलेन ॥ (८०)

शकु॥ हला चिन्तिदा मए गीदिआ। असण्णिहिदाणि उण लेहणसाहणाणि। (८१)

प्रिय॥ णं इमस्सिं सुओदरसुउमारे णलिणीवत्ते पदच्छेदभत्तीए णहेहिं आलिहीअदु। (८२)

शकु॥ यथोक्तं रूपयित्वा। हला सुणध दाव संगदत्था ण व त्ति। (८३)

उभे॥ अवहिदह्म। (८४)

शकु॥ वाचयति। (८५)

19 तुज्झ ण आणे हिअअं मम उण मअणो दिवा वि रत्तिं पि।
णिक्किव दावइ बलिअं तुह हुत्तमणोरहाइं अङ्गाइं। (८६)

---

(८०) ०उन्नमीति। पदानि रचयन्त्या योजयन्त्या अस्याः शकुन्तलाया उन्नमिता उद्धृता एका भ्रूलता यत्र तत् आननं वदनं कर्तृ, पुलकाञ्चितेन रोमाञ्चवता कपोलेन गण्डेन द्वारेण मयि मद्विषये अनुरागं कथयति व्यनक्ति। इत्यमार्य्या॥

(८१) शकु इति। हलेत्यादि। अयि चिन्तिता मया गीतिका असन्निहितानि पुनः लेखनसाधनानि। चिन्तिता चेतसा रचिता। असन्निहितानि अनुपस्थितानि। लेखनसाधनानि लेखनोपकरणानि। पुनरर्थः॥

(८२) प्रियमिति। णमित्यादि। नन्वस्मिन् शुकोदरसुकुमारे नलिनीपत्रे पदच्छेदभक्त्या नखैरालिख्यताम्। नखरत्वस्थाने। नखात्मकारणात्तत्रातुनयान्न्याणे नन्वि तत्रमर। शुकेति। शुकस्य पक्षिण उदरं क्रोडमिव सुकुमारं कोमलं तस्मिन्। पदच्छेदभक्त्या पदविच्छेदाय यावान् विभाग आवश्यकस्तावता विभागेन अनतिविभागेनेति यावत्॥

(८३) शकु इति। यथोक्तं प्रियंवदोपदिष्टानुरूपम्। हलेत्यादि। अयि शृणुत तावत् सङ्गतार्था न वेति। सङ्गतः सङ्गतो अर्थो यस्याः सा सङ्गतार्था गीतिकेति शेषः। इति शृणुतमित्यन्वयः॥

(८४) उभे इति। अवहिदह्म अवहिते स्वः। अवहिते सतमनोऽभिनिवेशे॥

(८५) शकु इति। वाचयति पठति। वचक् सन्देश इति कविकल्पद्रुमः। सन्देश पाठ अतएव वाचयताख्यिना निविमिति ह्लायुध उदाजहार॥

(८६) तुज्झेति। तव न जाने हृदयं मम पुनः मदनो दिवापि रात्रिमपि। निष्कृप

राजा ॥ अलमलमायासेन । (९२)

सन्दष्टकुसुमशयनान्याशुविमर्दितमृणालवलयानि ।
गुरुपरितापानि न ते गात्राण्युपचारमर्हन्ति ॥ (९३)

शकु ॥ ससाध्वसमात्मगतम् ॥ हिअअ तधा उत्तम्मिअ दाणिं ण किम्पि पडिवज्जसि । (९४)

अन ॥ इदो सिलादलेक्कदेसं अणुगेह्णदु महाभाओ । (९५)

शकु ॥ किञ्चिदपसरति । (९६)

राजा ॥ उपविश्य ॥ कच्चित् सखी वो नातिबाधते शरीरतापः । (९७)

प्रिय ॥ सस्मितम् ॥ दाणिं लद्धोसधो उवसमं गमिस्सादि । (९८)

शकु ॥ सलज्जा तिष्ठति । (९९)

प्रिय ॥ महाभाअ दोसम्मि वो अण्णोण्णाणुराओ पच्चक्खो सहीसिणेहो उण मं पुनरुत्तवादिणीं करेदि । (१००)

---

(९२) राजेति । वीप्सातिनिषेधार्था । आयासेन श्रमेण ।

(९३) सन्दष्टेति । सन्दष्टमाच्छादितं कुसुमशयनं यैस्तानि तथा आशु शीघ्रं अधुनैव विमर्दितानि लुण्ठनोल्लुण्ठनादिभिः कृत्वा दूषितानि मृणालानामवलयानि यैस्तानि अतएव गुरुर्महान् परितापो येषु तानि तथोक्तानि । गुरु मंहति चाप्यवदिति विश्व । ते तव गात्राणि अङ्गानि उपचारं सत्कारं नार्हन्ति कर्तुमुचितानि न भवन्तीत्यर्थः । गात्रमङ्गे कलेवरे इति विश्व । इयमार्या जातिः ॥

(९४) शकु इति । ससाध्वसं सभयम् । हिअअ इत्यादि । हृदय तथा उत्ताम्य इदानीं न किमपि प्रतिपद्यसे । उत्ताम्य उत्कण्ठितं भूत्वा । प्रतिपद्यसे बुध्यसे ॥

(९५) अनेति । इदो इत्यादि । इतः शिलातलैकदेशमनुगृह्णातु महाभाग । अनुगृह्णातु उपवेशनेनानुग्रहभाजनीकरु ॥

(९६) शकु इति । सुगमम् ॥

(९७) राजेति । शरीरतापो वो युष्माकं सखीं नातिबाधते नातिपीडयति अर्थान्मन्दतां गतः कच्चित् किमित्यर्थः । कच्चित् कामप्रवेदने इत्यमरः । कामप्रवेदनं मनोरथाभिव्यक्तिप्रश्नः ॥

(९८) प्रियमिति । दाणिमित्यादि । इदानीं लब्धौषधमुपशमं गमिष्यति । लब्धौषधः यस्य स शरीरताप इति शेषः । तवागमनं तदर्थं व्याकुलभावेनेति भावः ॥

(९९) शकु इति । सुगमम् ॥

(१००) प्रियमिति । महेत्यादि । महाभाग द्वयोरपि युवयोरन्योन्यानुराग प्रत्यक्ष

राजा ॥ भद्रे साधारणोऽयं प्रणयः सर्व्वथानुगृहीतोऽस्मि । (१०७)

शकु ॥ अनसूयामवलोक्य ॥ हला अलं वो अन्तेउरविरहपज्जुस्सुएण राएसिणा अवरुद्धेण । (१०८)

राजा ॥ इदमनन्यपरायणमन्यथा हृदयसन्निहिते हृदयं मम ।
यदि समर्थयसे मदिरेक्षणे मदनबाणहतोऽपि हतः पुनः ॥ (१०९)

अन ॥ बहुवल्लहा क्खु राआणो सुणीअन्ति ता जधा इअं णो पिअसही बन्धुअणसोअणीआ ण होदि तधा करिस्सदि । (११०)

राजा ॥ भद्रे किं बहुना । (१११)

---

पत्त्रा अनुपदेन। अभ्युपपत्तिरनुग्रह इत्यमरः। जीवितमवलम्बयितुं जीवनं संस्थापयितुम्। अन्यथा अचिरेणैवानङ्गदशासम्भव इति भावः। तथाच दृक्प्रीत्यागोन्मादमूर्च्छान्ता इत्यनङ्गदशा दशेति वात्स्यायनः ॥

(१०७) राजेति। साधारणः अस्या मम चोभयोः समानः। साधारणः समान इत्यमरः। प्रणयः प्रार्थनम्। सर्व्वथाङ्गीकारे ॥

(१०८) शकु इति। हलेत्यादि। अयि अत्र योऽन्तःपुरविरहपर्य्युत्सुकेन राजर्षिणा उपरुद्धेन। अन्तःपुराणामन्तःपुरिकाणां विरहेण पर्य्युत्सुकेन उत्कण्ठितेन राजर्षिणा उपरुद्धेन अलमवरोधेन वो युष्माकमलं सति विशेष्ये बाधे विशेषणमुपसंक्रामतीति न्यायादवरोधो वारणीय इत्यर्थः। अन्तःपुरादिशब्दानां तात्स्थ्यात् व्यवहारेऽपि प्रयोगो बहुधा दृश्यः ॥

(१०९) राजाह इदमिति। हे हृदयसन्निहिते चेतोऽवस्थिते अन्यस्याः परायणमन्यपरायणम्। पुंवत् कर्म्मेरिति पुंवद्भावः। न तदित्यनन्यपरायणम् अनन्याश्रयम्। परायणमभीष्टे स्यात् तत्पराश्रययोरपीति मेदिनी। मम हृदयं यदि अन्यथा अन्यपरायणतया समर्थयसे निश्चिनोषि हे मदिरेक्षणे मदिरे मत्तखञ्जनाविव ईक्षणे नेत्रे यस्याः सा हे तथोक्ते तदा मदनस्य बाणेन हतोऽपि अहं पुनर्हतः आघातितः। इदं द्रुतविलम्बितं नाम वृत्तम् ॥

(११०) अनेति। बहु इत्यादि। बहुवल्लभाः खलु राजानः श्रूयन्ते तद् यथा इयं नः प्रियसखी बन्धुजनशोचनीया न भवति तथा करिष्यति। बहुवल्लभा बह्व्यो वल्लभाः प्रिया येषां ते। प्रेयसी दयिता कान्ता प्राणेशा वल्लभा प्रिया। हृदयेशा प्राणसमा प्रेष्ठा प्रणयिनी च सेति हेमचन्द्रः। श्रूयन्ते न कदाचित् दृष्टा इति भावः। बन्धुजनस्य शोचनीया दुःखहेतुर्न भवति सुभगा भवतीत्यर्थः। करिष्यति महाराज इति शेषः ॥

(१११) राजेति। बहुना व्याहृतेनेति शेषः ॥

शकु॥ अरिहदि क्खु महाराओ इमं विसोढुं परोक्खं वा ण कि को मन्तेदि। (११८)

राजा॥ सस्मितम्। (११९)

अपराधमिमं ततः सहिष्ये यदि रम्भोरु तवाङ्गसङ्गसृष्टे।
कुसुमास्तरणे क्लमापहेऽत्र स्वजनत्वादनुमन्यसेऽवकाशम्॥(१२०)

प्रिय॥ सोपहासम्॥ णं एत्तिकेण उण तुट्ठो भविस्सदि। (१२१)

शकु॥ सरोषमिव॥ विरम विरम दुव्विणीदे एदावदवत्थं गदाए मए कीलसि। (१२२)

अन॥ बहिः अवलोक्य॥ पिअम्वदे एस तवस्सिमिअपोदओ

---

(११८) शकु इति। अरीहत्यादि। अर्हति खलु महाराज इदं विसोढुं परोक्षं वा न किं को मन्त्रयति। खलु इत्युन्नये। निषेधवाक्यालङ्कारजिज्ञासानुनये खल्वित्यमरः। को वा जनः परोक्षमसमक्षं किं न मन्त्रयति व्याहरति॥

(११९) राजेति। सस्मितम्॥

(१२०) अपरेति। रम्भे इव ऊरू यस्याः सा रम्भोरुः। वामनजघोरूत्तरपदमानात् स्त्रियामूङ्। हे रम्भोरु यदि तव अङ्गानां सङ्गेन सम्पर्केण सृष्टे युक्ते क्लमापहे तापापहारिणि अत्र कुसुमास्तरणे कुसुमशयने स्वजनत्वात् आत्मीयत्वादवकाशमवस्थानोचितस्थानमनुमन्यसे अनुजानासि ततोऽपराधमिमं सहिष्ये क्षमिष्ये। इदमेतदुपवृत्तं नाम। तदुक्तम्। उपवृत्तमिदं तदाऽपरत्वेन गुरुवर्णं यत् सुन्दरीपदान्ते इति। सुन्दरीलक्षणन्तूक्तम्। उपवृत्तमौपच्छन्दसिकम्। अतएव सुन्दरीं वैतालीयमेवाभिधायता पिङ्गलाचार्येण न औपच्छन्दसिकमिति वैतालीयप्रकरणे सूचितं व्याख्यातञ्च तत् वृत्तिकृता। ऋना युक्तेन यस्मिन् वैतालीये छन्दसि अन्ते गकारस्त्वधिको भवति तदौपच्छन्दसिकं नाम छन्द इति। गकारो गुरुवर्णः॥

(२२१) प्रियमिति। सोपहासं सपरिहासम्। णमिति। ननु एतावन्मात्रेण पुनस्तुष्टो भविष्यति। ननु प्रश्ने। एतावन्मात्रेण शय्यायामवकाशदानमात्रेण। भविष्यति भवानिति शेषः॥

(१२२) शकु इति। सरोषमिव कृतककरोषम्। विरमेति। विरम विरम दुर्विनीते एतावदवस्थां गतया मया क्रीडसि। विरम अपसर। व्याङ्परिरम इत्युपादानात् परस्मैपदम्। दुर्विनीते दुःशिक्षिते। एतावदवस्था एतावन्तं कालं मदनविधुरेण दौर्बल्यमिति यावत्। विधेय कान्तिकोऽवस्थेत्यमरः॥

किं शीकरैः क्लमविमर्दिभिरार्द्रवातं सञ्चालयामि नलिनीदलतालवृन्तम्।
अङ्के निधाय चरणावुत पद्मताम्रौ संवाहयामि करभोरु यथासुखं ते॥ (१२९)

शकु॥ ण माणणीएसुं जणेसुं अत्ताणं अवराहइस्सं॥ इति अवस्थासदृशमुत्थाय प्रस्थातुमिच्छति। (१३०)

राजा॥ अवष्टभ्य॥ सुन्दरि अपरिनिर्व्वाणो दिवसः इयञ्च ते शरीरावस्था। (१३१)

96 उत्सृज्य कुसुमशयनं नलिनीदलकल्पितस्तनावरणा।
कथमातपे गमिष्यसि परिबाधाकोमलैरङ्गैः॥ (१३२)

इति बलान्निवारयति। (१३३)

---

आराधयिता तोषयिता। आराधनं साधने स्यादवाप्तौ तोषणेऽपि चेत्यमरः। समीभूमौ मध्योपदे॥

(१२९) किमिति। हे करभोरु क्लमं शरीरग्लानिं तापमिति यावत् विमर्दयितुं विहन्तुं शीलं येषां ते तैः शीकरैः अम्बुकणैः आर्द्रः शीतलो वातो यस्य तं तथोक्तं नलिन्याः पद्मलतायाः दलं पत्रमेव तालवृन्तं व्यजनं किं सञ्चालयामि दोलयामि। व्यजनं तालवृन्तकमित्यमरः। उत अथवा। उताप्यर्थविकल्पयोरित्यमरः। पद्मे इव ताम्रौ अरुणौ। ताम्रं शुल्वे त्वरुणेऽपि चेति त्रिकाण्डशेषः। ते तव चरणौ अङ्के उत्सङ्गे। उत्सङ्गचिह्नयोरङ्क इत्यमरः। निधाय निवेश्य यथासुखं सुखमनतिक्रम्य येन सुखं स्यात् तथेति भावः। संवाहयामि मर्दयामि। इत्येतदुच्यतामिति पूर्वेणान्वयः। संवाहनं मर्दनं स्यात् भाराद्देहमर्दने इति विश्वः। वसन्ततिलकं नाम वृत्तम्॥

(१३०) शकु इति। ण इत्यादि। न माननीयेषु जनेष्वात्मानमपराधयिष्यामि। माननीयेषु पूज्येषु। अपराधयिष्यामि सेवनादेशादिति भावः। अवस्थासदृशं दौर्बल्यात् कृच्छ्रं कष्टमुत्थेति भावः॥

(१३१) राजेति। अवष्टभ्य अभिरुध्य। अवाम् स्तब्धे रम्यनिकटयोरिति वङ्कव्यात पतनम्। अपरिनिर्व्वाणः सर्व्वतोभावेन न निवृत्ततापः। शरीरावस्था देहस्य दाहाभिभूतता॥

(१३२) उत्सृज्येति। नलिनीदलेन पद्मिनीपत्रेण कल्पितं रचितं स्तनयोरावरणं छिदा यस्याः सा कुसुमशयनं पुष्पमयीं शय्यामुत्सृज्य विमुच्य परिबाधया पीडया चौर्येणेति यावत्। कोमलैः मार्दवैः ममैः अङ्गैः करणैः कथमातपे गमिष्यसि। इयमार्या॥

(१३३) इतीति। इति एवमुक्त्वा। निवारयति शकुन्तलामिति शेषः॥

शकु॥ मुञ्च मुञ्च मं ण क्खु अत्तणो पहवामि अथवा सहीमेत्तसरणा किं दाणिं एत्थ करिस्सं। (१३४)

राजा॥ धिग् व्रीडितोऽस्मि। (१३५)

शकु॥ ण क्खु अहं महाराअं भणामि देव्वं उवालहामि (१३६)

राजा॥ अनुकूलकारि दैवं कथमुपालभ्यते। (१३७)

शकु॥ कधं दाणिं ण उवालहिस्सं जं मं अत्तणो अणीसं करिअ परगुणेहिं लोहावेदि। (१३८)

राजा॥ स्वगतम्॥ (१३९)

अप्यौत्सुक्ये महति दयितप्रार्थनासु प्रतीपाः
काङ्क्षन्त्योऽपि व्यतिकरसुखं कातराः स्वाङ्गदाने।
आबाध्यन्ते न खलु मदनेनैव लब्धान्तरत्वा-
दाबाधन्ते मनसिजमपि क्षिप्तकालाः कुमार्यः॥ (१४०)

---

(१३४) शकु इति। मुञ्चेत्यादि। मुञ्च मुञ्च मां न खल्वात्मनः प्रभवामि अथवा सखीमात्रशरणा किमिदानीमत्र करिष्यामि। आत्मनः प्रभवामि प्रभुर्भवामि। [illegible] कर्मणि षष्ठी। मात्रपदमाह अथवेति। इदानीं सखीमात्रं शरणं रक्षितृ यस्याः साऽहं अत्र भवतो बलात्कारे विषये किं करिष्यामि। नान्यः कोऽपि शरणभूतोऽस्ति यत [illegible] भावः॥

(१३५) राजेति। धिगित्यात्मनिन्दायाम्। व्रीडितो लज्जावानस्मि। यतोऽन्यथा कन्याहरणदोषेणोपालभ्यो इति भावः। व्रीडति त्रपि लज्जे इति कविकल्पद्रुमः। व्रीडात् कर्त्तरि क्तः॥

(१३६) शकु इति। णेत्यादि। न खल्वहं महाराजं भणामि दैवमुपालभे। खलु त्वनुनये। उपालभे निन्दामि। तथाच एव योजयिष्यता दैवेन कथमहं परतन्त्री कृतेति पूर्वाभिप्रायः॥

(१३७) राजेति। अनुकूलकारि अभिमतार्थसाधि॥

(१३८) शकु इति। कधमित्यादि। कथमिदानीं नोपालप्स्ये यन्मामात्मनोऽनीशां कृत्वा परगुणैर्लोभयति। उपालप्स्ये दैवमिति शेषः। यत् दैव। आत्मनोऽनीशाम् अस्वतन्त्राम्। लोभयति प्रलोभयति॥

(१३९) राजेति। स्वगतमनतिस्पष्टम्॥

(१४०) अपीति। महति प्रवर्त्तति औत्सुक्ये इष्टार्थोद्योगेऽपि। इष्टार्थेष्वत

शकु ॥ गच्छन्त्येव । (१४१)

राजा ॥ न कथमात्मनः प्रियं करिष्ये ॥ उपसृत्य पटान्तमवलम्बते । (१४२)

शकु ॥ पोरव रक्ख रक्ख विणअं, इदोतदो इसिओ सञ्चरन्ति ।(१४३)

राजा ॥ सुन्दरि अलं गुरुजनाद् भयेन न ते विदितधर्म्मा तत्रभवान् काश्यपः खेदमुपयास्यति । यतः । (१४४)

गान्धर्व्वेण विवाहेन बह्व्योऽथ मुनिकन्यकाः ।
श्रूयन्ते परिणीतास्ताः पितृभिश्चानुमोदिताः ॥ (१४५)

---

उत्सुक इत्यमरः । दयितस्य प्रियस्य । दयितं वल्लभं प्रियमित्यमरः । मार्गणाय क्रियाविशेषणमिति भावः । प्रतोषा परार्द्धतुल्य । प्रतीपोऽन्यः परार्द्धतुल्ये इति शब्दाब्धिः । तथा व्यतिकरेण व्यतिषङ्गेन अन्योन्यसंयोगेनेति यावत् यत् सुखं तत् कान्त्योऽभिलषन्त्योऽपि । व्यतिकरः समाख्यातो व्यसनव्यतिषङ्गयोरिति विश्वः । साध्वसाने निजावयवार्पणे कातरा भयाकुला । अभीरौ कातर इत्यमरः । कुमार्य्योऽन्यासु समर्था अन्यान्तरत्वात् जन्यापरत्वात् न खलु न केवलं मदनेनैव व्याबाध्यन्ते पीड्यन्ते किन्तु तपस्वितोऽपि यदि स्यात् कालो मदनस्य कृतार्थं तावमयो याभिलाषयोश्च अन्यो मनसि जायत इति मनसिजः । विभक्तिरलुक् । स मदनमपि व्याबाधन्ते पीडयन्ति । अत्र परार्द्धे उभयो परस्परं प्रति बाधनरूपैकक्रियाकारणत्वादन्योन्यालङ्कारः । यदुक्तं दर्पणे । अन्योन्यमुभयोरेकक्रियया कारणं मिथ इति । इदं मन्दाक्रान्ता नाम वृत्तम् ॥

(१४१) शकु इति । एवकारेण गतेरवाधितत्वं प्रत्येतव्यम् ॥

(१४२) राजेति । दुःखं मे भूयात् दुःखं मे मा भूदिति सांसारिके द्वयोरेव क्रियारम्भकत्वादाह कथमिति । प्रियं कर्म्मेति शेषः । पटान्तं वस्त्राञ्चलम् । पटश्चित्रपटे वस्त्रे इति मेदिनी । अवलम्बते स्पृशति ॥

(१४३) शकु इति । पोरवेत्यादि । पौरव रक्ष रक्ष विनयम्, इतस्ततः ऋषयः सञ्चरन्ति । विनयं सौजन्यम् । सञ्चरन्ति भ्रमन्ति । समस्तृतीयायुक्तादित्यात्मनेपदम् । यदि कोऽपि दृष्ट्वैतत्प्रवृत्तो गुरवे निवेदयेदिति भावः ॥

(१४४) राजेति । गुरुजनात् पितुः । ते तव पितृत्वसम्बन्धी कण्व इत्यन्वयः । विदिता ज्ञायमाना धर्म्मा आचारा येन स विदितधर्म्मा आचारज्ञ इत्यर्थः । धर्म्मा पुण्ययमन्यायस्वभावाचारसोमपा इत्यमरः । धर्म्मादनिच् । खेदमुपतापम् । ननु कथमयमनाचारोऽपि चरितव्यो गुरुणैतत आचारस्य साधितत्वात् साधयितुमाह यत इति ॥

(१४५) गान्धर्व्वेणेति । बह्व्योऽनेका मुनिकन्यकास्तापसकुमार्य्यो गान्धर्व्वेणान्योन्यसमयपूर्व्वकेण विवाहेन । गान्धर्व्वः समयान्मिथ इति याज्ञवल्क्यः । परिणीता

राजा॥ कथमेवं प्रिये अनुरागैकरसं मामुत्सृज्यात्र निरपेक्षैव गतासि। (१५१)

२९ अनिर्दयोपभोगस्य रूपस्य मृदुनः कथम्।
कठिनं खलु ते चेतः शिरीषस्येव बन्धनम्॥ (१५२)

मकु॥ एदं सुणिअ ण मे अत्थि विहवो गच्छिदुं। (१५३)

राजा॥ सम्प्रति प्रियाशून्ये किमस्मिन् लतामण्डपे करोमि। (१५४)

अपतोऽवलोक्य॥ हन्त व्याहतं मे गमनम्। (१५५)

३० मणिबन्धाद् गलितमिदं सक्रान्तोशीरपरिमलं तस्याः।
हृदयस्य निगडमिव मे मृणालवलयं स्थितं पुरतः॥ (१५६)

---

भावानुबन्ध भावस्याभिप्रायस्य अनुबन्धमनिवृत्तिमनुवर्तिमिति यावत्। भाव सत्तास्वभावाभि-प्रायचेष्टात्मजन्मस्विति दोषेऽप्यादेऽनुबन्ध स्यात् प्रकृत्यादिष्, मश्वरे। तुष्यानुयायिनि प्रियो प्रत्यक्ष्यानिवर्तन इति चामर॥

(१५१) राजेति। अनुरागैकरस अनुरागो रतिरेव एक केवलो रसो रसता गतो यस्य तम्। शृङ्गारमात्ररसाविष्टमिति यावत्। तदुक्तं। विभावेनानुभावेन व्यक्तः सञ्चारिणा तथा। रसतामेति रत्यादिः स्थायी भाव सचेतसामिति। तथा। पुंस स्त्रियां स्त्रियाः पुंसि संयोगं प्रति या स्पृहा। स शृङ्गार इति ख्यातो रतिक्रीडादिकारणमिति। उत्सृज्य त्यक्त्वा। निरपेक्षा निःस्पृहा। अपपूर्व्वस्य घातेराकाङ्क्षार्थत्वात्॥

(१५२) अनिर्दयेति। अनिर्दयोपभोगस्य अजातगाढालिङ्गनादिव्यापारस्य अतएव मृदुनः कोमलस्य ते तव रूपस्य आकारस्य। रूपं स्वभावे सौन्दर्ये नाणके पशुशब्दयोः। ग्रन्थावृत्तौ नाटकादावाकारश्लोकयोरपीति विश्वः। चेतः खलु केवलं हृदयं मृदुनः शिरीषस्य तत्पुष्पस्य बन्धनं वृन्तमिव कठिनम्। अत्रोपमालङ्कारः॥

(१५३) मकु इति। एतदिति हि। इदं श्रुत्वा न मेऽस्ति विभवो गन्तुम्। विभवः शक्तिः॥

(१५४) राजेति। सम्प्रति इदानीम्। एतर्हि सम्प्रतीदानीमित्यमरः। लता-मण्डपे लतागृहे॥

(१५५) अपत इति। मृणालवलयमवलोक्य हर्षादाह हन्तेति। व्याहतं प्रतिरुद्धम्॥

(१५६) गमनव्याघातकं दर्शयति मणीति। मणिबन्धात् प्राणिप्रकोष्ठयोः सन्धि-स्थानात् गलितं परिभ्रष्टम् इदं दृश्यमानं संक्रान्त संपर्कवशात् सङ्गत नग्न रक्त

राजा ॥ सहर्षमात्मगतम् ॥ इदानीमस्मि विश्वसितः भर्त्तृदाराभाषण-पदमेतत् । (१७३)

प्रकाशम् ॥ सुन्दरि नातिश्लिष्टः सन्धिरस्य मृणालवलयस्य यदि तेऽभिमतं तदन्यथा घटयिष्यामि । (१७४)

सकु ॥ स्मितं कृत्वा ॥ अधा दे रोचदि । (१७५)

राजा ॥ सव्याजं विलम्ब्य प्रतिमोच्य ॥ सुन्दरि दृश्यताम् । (१७६)

अयं स ते श्यामलतामनोहरं विशेषशोभार्थमिवोज्झिताम्बरः ।
मृणालरूपेण नवो निशाकरः करं समेत्योभयकोटिमाश्रितः ॥(१७७)

सकु ॥ ण दाव णं पेक्खामि पवणकम्पिदकण्णुप्पलरेणुणा कलुसीकिदा मे दिट्ठी । (१७८)

---

(१७३) राजेति । आत्मगतमनतिप्रकाशम् । विश्वसितो जातविश्वासः । एतत् आर्य्यपुत्रेति । भर्त्तृदाराभाषणपदं भर्त्तरि प्रयोक्तव्यं पदम् । तदाह भरतः । आर्य्यपुत्रेति सम्बोध्यः पतिः पत्नीजनेन चेति ॥

(१७४) प्रकाशमिति । विस्पष्टमित्यर्थः । नातिश्लिष्टः न सम्यक् श्लेषं गतः न सुष्ठु मिलित इति यावत् । सन्धिरुभयकोटियोगः । अभिमतं सम्मतम् । तत् तदा । अन्यथा घटयिष्यामि पृथग्विधं करिष्यामि ॥

(१७५) सकु इति । अधेत्यादि । यथा ते रोचते । यथा यत्प्रकारं ते तुभ्यं रोचते प्रीतिमुत्पादयति । तथा क्रियतामिति शेषः ॥

(१७६) राजेति । सव्याजं अन्यथाभ्यासमकपटेन सहितं विलम्ब्य कालं गमयित्वा । प्रतिमोच्य परिधाप्य । वलयमिति शेषः । दृश्यतामित्यस्य श्लोकोक्तेनान्वयः ॥

(१७७) अयमिति । अयं सः प्रसिद्धो नवः कलाभाक् निशाकरश्चन्द्रमा उज्झिताम्बरो त्यक्ताकाशवासः सन् । एतेन मुक्तवस्त्रत्वमपि ध्वन्यते । अम्बरं व्योम्नि वाससीत्यमरः । विशेषशोभार्थं शोभातिरेकार्थमिव श्यामलतया नीलिम्ना मनोहरं चित्तोन्मादकम् । एतेन गगनसादृश्यमपि दर्शितम् । तव करं मृणालरूपेण समेत्य समागत्य उभयकोटिं अग्रद्वयमाश्रितः । कुण्डलीभूय दृढं गृहीतवानिति भावः । कोटिरस्त्री प्रकर्षे चेति धरणिः । अत्यासम्भवितमपि कुण्डलीभूतकलाभाजमिन्दुं सुषमाप्रौढ्या सम्भाव्य तदात्मतया उपमेयस्य मृणालवलयस्य सम्भावनादुत्प्रेक्षालङ्कारः । तदुक्तं दर्पणे । भवेत् सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मनेति । वंशस्थविलं वृत्तम् ॥

(१७८) सकु इति । णेत्यादि । न तावदेनं प्रेक्षे पवनकम्पितकर्णोत्पलरेणुना ।

राजा ॥ सस्मितम् ॥ यदनुमन्यसे तदहमेनां वदनमारुतेन विशदां करवाणि । (१७९)

शकु ॥ तदो अणुकम्पिदा भवेअं किन्तु ण दे वीससेमि । (१८०)

राजा ॥ मा मैवं नवो हि परिजनः सेव्यानामादेशात् परं न वर्त्तते । (१८१)

शकु ॥ अअं ज्जेव उवआरो अविस्सासजणओ । (१८२)

राजा ॥ स्वगतम् ॥ नाहमेवं रमणीयमात्मनः सेवावसरं शिथिलयिष्ये ॥ मुखमुन्नमयितुं प्रवृत्तः । (१८३)

शकु ॥ प्रतिषेधं रूपयन्ती विरमति । (१८४)

---

कलुषीकृता मे दृष्टिः । एवं कुवलयाक्षिनिमादरम् । न प्रेक्षे न पश्यामि । कुतः इत्यत आह पवनेनेति । पवनेन कम्पितयोः चञ्चितयोः कर्णोत्पलयोरेरणुसम्भूतयोः कमलयोः रेणुना रजसा इति लोचनं कलुषीकृता व्याप्ताहीकृता ॥

( १७९ ) राजेति । अनुमन्यसे अनुजानासि । तत् तस्मात् । एनां दृशम् । वदनमारुतेन फुत्कारेण । विशदां निर्मलाम् । विशदो शब्दे गुणात् । तद्युक्ते लिङ्गे वाच्यवदिति यद्वाचि । यथा विशदां, व्यक्ताम् । विशदः पाण्डरे व्यक्ते इति मेदिनी । लिङ्गत्रयेऽपि । करवाणीति प्रार्थनायां लोट् ॥

( १८० ) शकु इति । तदो इत्यादि । तदानुकम्पिता भवेयम् । किन्तु पुनरहं न ते विश्वसिमि । अनुकम्पिता करुणया आश्रिता । भवेयमिति प्रार्थनायां लिङ्। ते इति सम्बन्धमात्रविवक्षायां षष्ठी ॥

( १८१ ) राजेति । मा मैवं एवं मा वद मा शङ्कय । हि यस्मात् नवोऽचिरोपगतः परिजनः परिचारको जनः सेव्यानामुपासनीयानाम् आदेशात् परम् आदिष्टातिरिक्तं व्यापारं न वर्त्तते न तत्र रमते । परमिति भाववाचकत्वाद् देशाध्वकालभावविधि कर्मत्वम् ॥

( १८२ ) शकु इति । अअमित्यादि । अयमेवोपचारोऽविश्वासजनकः । उपचारः आदरातिशयः ॥

( १८३ ) राजेति । रमणीयं सुन्दरम् । आत्मनः सेवावसरं सेवायै अवकाशम् । शिथिलयिष्ये त्यक्ष्ये । उन्नमयितुमुत्तोलयितुम् ॥

( १८४ ) शकु इति । प्रतिषेधं निषेधं रूपयन्ती क्रियया दर्शयन्ती विरमति निवर्त्तते ॥

विचिन्त्य ॥ अहो धिगसम्यक् चेष्टितं प्रियां समासाद्य कालहरणं कुर्व्वता मया । तदिदानीम् । (२१४)

रहः प्रत्यासत्तिं यदि सुवदना यास्यति पुन-
र्न कालं हास्यामि प्रकृतिदुरवापा हि विषयाः ।
इति क्लिष्टं विघ्नैर्गणयति च मे मूढहृदयं
प्रियायाः प्रत्यक्षं किमपि च तथा कातरमिव ॥ (२१५)

नेपथ्ये ॥ भो भो राजन् ! (२१६)

---

मृणाल विसमित्यमरः । इति एवरूपेण व्याबध्यमाने द्रष्टुं प्रवृत्ते हृदयं चक्षुषी यस्य च तथोक्तोऽहं भूयात् प्रियाङ्कितादपि वेतसलतागृहात् गम्भीरतरमनलङ्कारात् सहसा हठात् निर्गन्तुं न दैवं समर्थोऽस्मि । व्याबध्यमानेति व्याङ्पूर्व्वस्य वसुज सर्पणे इत्यस्य रूपम् । आत्मनेपदित्वं तु आत्मनेपदमिच्छन्ति परस्मैपदिनो क्वचिदिति न्यायात् । व्याबध्यमानेति पाठे इति एवं द्वयं तद्व्यापारेण व्याबध्यमाने सम्बध्यमाने हृदये यस्य स तथोक्त इत्यर्थः । इह शार्दूलविक्रीडितं नाम वृत्तम् ॥

(२१४) विचिन्त्येति विचार्य्येत्यर्थः । अहो विषादे । अहो धिगर्थे शोके च करुणार्थे विषादयोरिति मेदिनी । धिगिति । प्रियां शकुन्तलां समासाद्य प्राप्य कालहरणं स्वाभिमतार्थसाधने विलम्बं कुर्व्वता मया असम्यक् चेष्टितं तथा अनुचितं धिक् । तत् तस्मात् इदानीमनुना मूढहृदयं प्रियायाः प्रत्यक्षं गणयतीति श्लोकेनान्वयः ॥

(२१५) रह इति । सु शोभनं वदनं यस्याः सा सुवदना । आद्युदात्तेऽपि नासिकोदरादि-बह्वच इति बह्वचः प्रतिषेधात् । शकुन्तला यदि पुनरप्यरः रहः प्रत्यासत्तिं विविक्तभूमौ सन्निकर्षम् । विविक्तविजनच्छन्ननिःशलाकास्तथा रहः इत्यमरः । यास्यति तदा कालं न हास्यामि त्यक्ष्यामि न विलम्बयिष्यामीति यावत् । तत्क्षणादेव यथाकर्त्तव्यं करिष्यामीति भावः । एतेनास्य वैवाहिकसंस्काराद्यपेक्षया विधिमनपेक्ष्य माचरणीयम् । गान्धर्व्वादीनामष्टानां साध्वीकारकत्वमुक्तं । यथा रत्नमालायाम् । प्राजापत्यमाहुरैवार्षं ब्राह्मं कायेऽथ पूर्वेष्वेव कार्य्या विवाहाः । गान्धर्व्वोऽसौ राक्षसश्चासुरश्च पैशाचो वा धर्म्मकाले निषेध्या इति । हि यतो विषया इन्द्रियार्थाः । विषया अर्थाः । गोचरा इन्द्रियार्थाश्चेत्यमरः । प्रकृत्या स्वभावेन दुरवापा दुर्लभाः । किन्तु दुर्दैवैः क्लिष्टं पीड़ितं मे मूढहृदयं इति प्रकारेण प्रियायाः प्रत्यक्षं साक्षात्कारं गणयति च तथा किमपि अनिर्व्वचनीयं कातरमधीरमिव भवति च । इह वृत्तं शिखरिणी नाम ॥

(२१६) नेपथ्य इति । सुगमम् ॥

सायन्तने सवनकर्मणि सम्प्रवृत्ते
वेदिं हुताशनवतीं परितः प्रकीर्णाः ।
छायाश्चरन्ति बहुधा भयमादधानाः
सन्ध्याभ्रकूटकपिशाः पिशिताशनानाम् ॥ (२१७)

राजा ॥ आकर्ण्य सावष्टम्भम् ॥ भो भोस्तपस्विनो मा भैष्ट मा भैष्ट अयमहमागत एव ॥ इति निष्क्रान्तः ।(२१८)

तृतीयोऽङ्कः ।(२१९)

(२१७) सायन्तने इति । सायन्तने सायङ्कालीने सवनकर्मणि यागकर्मणि । सवनं यजने स्नाने सोमनिर्दलनेऽपि चेति विश्वः । अग्निहोत्र इति यावत् । तथाच श्रुतिः । सायमग्निहोत्रं जुहोति यदग्नये च प्रजापतये साय प्रातर्जुहोतीति । सम्प्रवृत्ते आरब्धे सति हुताशनवतीं अग्निवेदिकां वेदिं परितो सम्प्रवृत्ते समन्ततः । समन्ततस्तु परितः सर्वतो विष्वगित्यमरः । अभ्युभयपरिसर्वतः इत्यत्र द्वितीया । प्रकीर्णा व्याप्ता अतएव भयं हृदि उद्वेगादिकमादधानाः उत्पादयन्त्यः सन्ध्यायाः अभ्रकूटाः मेघपुञ्जाः इव कपिशाः श्यावाः कृष्णपीतवर्णा इति यावत् । अभ्रं मेघ इति । पुञ्जराशी तूत्कर कूटमस्त्रियामिति, श्यावः स्यात् कपिश इति चामरः । पिशितं मांसमश्नन्ति ये ते पिशिताशनाः । नन्द्यादित्वात् ल्युः । पिशितं तरसं मांसमित्यमरः । तेषां बहुधा बहुप्रकाराश्छायाश्चरन्ति इतस्ततो भ्रमन्ति । तथाच मायाशतानामपि विघ्नकराः अपि राक्षसाः अनवरतमस्मिन्कर्मणि यतन्तीभिश्छायाभिरनुमीयन्त इति भावः । वसन्ततिलकं वृत्तम् ॥

(२१८) राजेति । सावष्टम्भं समारम्भं योद्धुमिति यावत् । अवष्टम्भः सुवर्णे च स्तम्भमारम्भयोरपीति विश्वः । भैष्टेति । माङ्योगात् माङि लुङि टो । युष्मत्कर्तृत्वात् मध्यमबहु त्वात् तस्यास्तविभक्तिः । अमेति कारणाभावागमः । टाप् लिविरिति वि । इवर्णान्तमिषे भाषेम । प्रभवहेति हवि । तत तथ तस ठच । इति एवमुक्त्वा निष्क्रान्तो रङ्गमेरयस्तु ॥

(२१९) तृतीति । अङ्कः परिच्छेदः ॥

इति श्रीकृष्णनाथसार्वभौमकृतायामभिज्ञानशकुन्तलटीकायां
मनोभिरामाख्यायां तृतीयाङ्कविवरणम् ॥

———

# चतुर्थोऽङ्कः ।

ततः प्रविशतः कुसुमावचयमभिनयन्त्यौ सख्यौ । (१)

अनसूया ॥ हला पिअंवदे जइ वि गन्धव्वेण विवाहविहिणा णिव्वुत्तकल्लाणा पिअसही सउन्तला अणुरूवभत्तिभाइणी संवुत्ता तह वि ण मे णिव्वुदं हिअअं । (२)

प्रियंवदा ॥ कधं विअ । (३)

अन ॥ अज्ज सो राएसी इट्ठिपरिसमत्तीए इसिहिं विसज्जिदो अत्तणो णअरं पविसिअ अन्तेउरसमागमादो इअं जणं सुमरेदि ण वत्ति । (४)

---

(१) तत इति । कुसुमावचयं पुष्पचयनम् । अभिनयन्त्यौ रूपयन्त्यौ । सख्यौ शकुन्तलाया इति शेषः ॥

(२) अनसूयेति । हलेत्यादि । अयि प्रियंवदे यद्यपि गान्धर्वेण विवाहविधिना निर्वृत्तकल्याणा प्रियसखी शकुन्तला अनुरूपभर्तृभागिनी संवृत्ता तथापि मे न निर्वृतं हृदयम् । गान्धर्वेणान्योन्यसमयपूर्वकेण । विवाहविधिना विवाहकर्मणा । निर्वृत्तकल्याणा निष्पन्नमङ्गला । अनुरूपं रूपे गुणे च सदृशं भर्तारं भर्तृ गौणं यस्याः सा अनुरूपभर्तृभागिनी । स्त्रीपुंसयोः कामात्परस्परेच्छया शुभाशुभजात्यजातिसंस्कारशून्यविधिसंयुक्तयो र्गान्धर्वाख्योद्वाह इति स्मृत्यादि प्रसिद्धत्वम् । निवाह्यस्य गः । निर्वृतं शान्तीभूतं सुखि तम् । निर्वृतिः सुस्थितावस्तगमने च सुखे स्त्रियामिति मेदिनी ॥

(३) प्रियंवदेति । कधं विअ कथमिव ॥

(४) अनेति । अज्जेत्यादि । अद्य स राजर्षिरिष्टिपरिसमाप्त्या ऋषिभिर्विसर्जितः आत्मनो नगरं प्रविश्य अन्तःपुरसमागमादिमं जनं स्मरति न वेति । इष्टिपरिसमाप्त्या यागसमापनेन । इष्टि यागेच्छयोरित्यमरः । विसर्जितो नगरगमनायानुज्ञातः । अन्तःपुरसमागमात् अवरोधसंयोगात् । इमं जनं प्रियसखीम् । स्मरति यद्वा न स्मरति इति यद् चिन्तया न निर्वृतं हृदयमित्यन्वयः ॥

प्रियं ॥ एत्थ दाव वीसत्था होहि ण हि तादिसा आकिदिविसेसा गुणविरहिणो होन्ति। एत्तिअं उण चिन्तणीअं तादो तीत्थजात्तादो पडिणिउत्तो इमं वुत्तन्तं सुणिअ ण आणे किं पडिवज्जिस्सदित्ति। (५)

अन ॥ जधा मं पुच्छसि तधा अभिमदं तादस्स। (६)

प्रिय ॥ कधं विअ। (७)

अन ॥ गुणवदे वरस्स कण्णआ पडिवादणीअ त्ति अअं दाव पढमो कप्पो। तं जइ देव्वं सम्पादेदि णं अअत्थो गुरुअणो। (८).

---

(५) प्रियमिति। एत्थेत्यादि। अत्र तावद् विश्वस्ता भव न हि तादृशा आकृतिविशेषा गुणविरहिणो भवन्ति, एतावत् पुनश्चिन्तनीयं तातस्तीर्थयात्रातः प्रतिनिवृत्त इमं वृत्तान्तं श्रुत्वा न जाने किं प्रतिपत्स्यत इति। अत्र राज्ञ ऋतौ। विश्वस्ता स्थिरनिश्चया। हि यस्मात् तादृशास्तद्वत् आकृतिविशेषा विशिष्टा आकृतयः। गुणभजनप्रभृत्यादिक विहरयन्ति त्यजन्तीति गुणविरहिणो न भवन्ति। अतएवाह आकारसदृशप्रज्ञ प्रज्ञया सदृशागम इति। इहैक तु त्याग इति कविकल्पद्रुम। एतावत् पुनरिदन्तु चिन्तनीयं विचारणीय किमित्याकाङ्क्षायामित्यन्तम्। किं प्रतिपत्स्यते किं मंस्यते ॥

(६) अनेति जधेत्यादि। यथा मां पृच्छसि तथाभिमतं तातस्य। यथा यत् विषये प्रियंवदया पौरवराजवृत्तम् इति यावत। मां पृच्छसि श्रुत्वा किं प्रतिपत्स्यत इति जिज्ञाससे तथा तत् तातस्य अभिमतं वाञ्छितम्। अभिमतमिति ज्ञानार्थत्वाद् वर्त्तमाने क्त। तद्योगात् क्तस्य चेति कर्त्तरि षष्ठी। जह जह पेक्खामि तह तह अणुमद भवे इति क्वचित् पठ्यते यथाहं प्रेक्षे तथा तस्यानुमतं भवेदित्यर्थः ॥

(७) प्रियमिति। कध विअ कथमिव ॥

(८) अनेति। गुणवत्यादि। अनुरूपस्य वरस्य हस्ते कन्या प्रतिपादनीयेत्ययं प्रथम कल्प। तं यदि दैव सम्पादयति ननु कृतार्थो गुरुजन। वरस्य जामातु। वरो जामातरि वृते देवतादेरभीप्सित इति मेदिनी। प्रतिपादनीया दानीया इत्ययं प्रथम कल्प प्रथमो विधि। कल्पे विधिक्रमौ। मुख्य स्यात् प्रथम कल्पोऽनुकल्पस्तु ततोऽधम इत्य मर। तं मुख्यकल्पम्। दैव नियतिरेव दैवे पुरुषकारे च कर्मसिद्धि र्व्यवस्थितेत्युक्तगुरुजन पुरुषकार विनेत्यर्थ। सम्पादयति निष्पत्तिं यति। न्यर्थाना सयोरिव्याख्यायाः भव्ये क्ते। कृतार्थ कृतप्रयोजन ॥

अन ॥ अं अज्ज उण असंणिहिदा हिअएण तेण हि भोदु एत्तिकेहिं कुसुमेहिं पओअणं ॥ इति प्रस्थिते। (१६)

पुनर्नेपथ्ये ॥ आः कथमिति मां परिभवसि। (१७)

विचिन्तयन्ती यमनन्यमानसा
तपोनिधिं वेत्सि न मामुपस्थितम्।
स्मरिष्यति त्वां न स बोधितोऽपि सन्
कथां प्रमत्तः प्रथमं कृतामिव ॥ (१८)

उभे ॥ श्रुत्वा विषण्णे। (१९)

प्रियं ॥ हद्धी हद्धी तं ज्जेव संवुत्तं जं मए चिन्तिदं कस्सिं पि पूआरिहे अवरद्धा सुण्णहिअआ पिअसही सउन्तला ॥ (२०)

---

(१६) अनेति। अमित्यादि। अम् अद्य पुनरसन्निहिता हृदयेन, तेन हि भवतु एतावद्भिरेव कुसुमैः प्रयोजनम्। अं स्मरणे। अं ज्ञाने निश्चयस्त्योरिति मेदिनी। हृदयेन असन्निहिता असम्बद्धा अन्यगतहृदयेति भावः। तेन हि तेनैव हेतुना। एतावद्भिरियद्भिरेव कुसुमैः प्रयोजनं बलिकर्म सौभाग्यदेवताभ्यर्चनरूपं भवतु। प्रस्थिते गच्छतः॥

(१७) पुनरिति। आः कोपे। आस्तु स्यात् कोपपीडयोरित्यमरः। परिभवसि उपेक्षितवचनत्वादाद्रियसे। अनादरः परिभव इत्यमरः॥

(१८) विचिन्तयन्तीति। यं पुरुषं विचिन्तयन्ती स्मरन्ती सती अनन्यमानसा नास्त्यन्यस्मिन् विषये मानसं मनो यस्याः सा तथोक्ता त्वम्। चिन्ताव्यग्रान्तानां सत्त्वानामिव ग्रहणात् ध्यानादपि मानसगतत्वमेव। उपस्थितं स्वद्वारागतं तपांसि ब्रह्मचर्यादीनि धर्मा वा निधीयन्ते धार्यन्ते अस्मिन्निति तपोनिधिः। डाङ्गे इति कर्मोपपदाद् धाञोऽधिकरणे किः। तथाभूतं मां न वेत्सि नानुभवसि न तच्चिन्तासक्तभूता सती बोधितोऽपि स्मृतिहेतुभूतक्रियया स्मरणाय प्रेरितोऽपि सन् प्रथमं कथारम्भसमये प्रमत्तोऽकृतावधानः पुमान्। प्रमादोऽनवधानतेत्यमरः। पश्चात् बोधितोऽपि सन् कृतामुपन्यस्तां कथां वाक्प्रबन्धमिव त्वां न स्मरिष्यति कृतसम्पर्कं तया नानुभविष्यति। आक्षोपमालङ्कारः। वंशस्थविलं वृत्तम्॥

(१९) उभे इति। विषण्णे खातविषादे॥

(२०) प्रियमिति। हद्धीत्यादि। हा धिक् हा धिक् तदेव संवृत्तं यन्मया चिन्तितं कस्मिन्नपि पूजार्हे अपराद्धा शून्यहृदया प्रियसखी शकुन्तला। यन्मया चिन्तितं अनुमितं

अन॥ पुरोऽवलोक्य॥ ण क्खु जस्सिं कस्सिं पि एसो दुव्वासा सुलहकोवो महेसी तथा समिअ अविरलपादत्तुवराए गदीए पड़िणिउत्तो। (२१)

प्रियं॥ को अण्णो हुदवहादो पहवदि दहिदुं ता गच्छ पाएसुं पडिअ णिवत्तावेहि जाव से अहं पि अग्घोदअं उवकप्पेमि। (२२)

अन॥ तह॥ इति निष्क्रान्ता। (२३)

प्रियं॥ पदान्तरे स्खलितं रूपयन्ती॥ अम्मो आवेअक्खलिदाए गदीए परिब्भट्ठं मे अग्गहत्थादो पुप्फभाअणं॥ इति पुष्पोच्चयं रूपयति। (२४)

---

तदेव सहसं सम्भूतम्। तदेव विहरन्तीति कश्चिदित्यादि पूर्वार्द्धे सत्कार्थ्ये। अपराद्धा कृतापराधा। शून्यहृदया रागाकुलितहृदया॥

(२१) अनेति। पुरोऽग्रतः। स्यात् पुरः पुरतोऽग्रत इत्यमरः। नेत्यादि। न खलु यस्मिन् कस्मिन्नपि एष दुर्वासाः सुलभकोपो महर्षिः। तथा शप्त्वा अविरलपादत्वरया गत्या प्रतिनिवृत्तः। न खलु अपराद्धेति पूर्व्वेण सम्बन्धः। यस्मिन् कस्मिन् सामान्यजने इत्यर्थः। सुलभः सहजः कोपो रोषो यस्य स सुलभकोपः। तथा शप्त्वा विचिन्तयन्तीत्यादिना शप्त्वा। अविरलेति। अविरला घनविन्यस्ताः पादा यस्यां सा तथाभूता त्वरा यत्र सा तया। प्रतिनिवृत्तः परावृत्तो भूतः॥

(२२) प्रियमिति। को इत्यादि। कोऽन्यो हुतवहात् प्रभवति दग्धुं तद् गच्छ पादयोः पतित्वा निवर्त्तय। यावदहमपि अर्घोदकमुपकल्पयामि। हुतवहाद् वह्नेरन्यः कः पदार्थो दग्धुं प्रभवति प्रभुर्भवति। दुर्वाससं विना क एवं शप्तुमर्हतीति भावः। गच्छ दुर्वाससः समीपमिति शेषः। निवर्त्तय आश्रमं नय। यावत् आ निवर्त्तनात्। यावत् तावच्च साकल्येऽवधौ मानेऽवधारणे इत्यमरः। अत्र मर्यादायामित्यर्थः। अर्घोदकमर्घार्थं जलम्। उपकल्पयामि पुष्पफलादिभिः सुसज्जीकरोमि॥

(२३) अनेति। तह तथा॥

(२४) प्रियमिति। पदान्तरे अन्यस्मिन् पदविक्षेपे स्खलितं गतिवैलक्षण्यम्। अम्मो इत्यादि। अहो आवेगस्खलितया गत्या परिभ्रष्टं मे अग्रहस्तात् पुष्पभाजनम्। आवेगेन त्वरया स्खलितया अन्यथाभूतया। परिभ्रष्टं पतितम्। अग्रहस्तात् हस्ताग्रात् अग्रपदस्य राजदन्तादित्वात् पूर्व्वनिपातः। पुष्पभाजनं पुष्पपात्रम् पुष्पोच्चयं विकीर्णपुष्पसंग्रहम्। पुष्पान्तरसंग्रहं वा॥

अन॥ प्रविश्य॥ सहि सरीरी विअ कोवो कस्स अणुणअं सो गेह्णदि। किञ्च उण सो अणुकम्पिदो मए। (२५)

प्रिय॥ एदं ज्जेव तस्सिं बहुदरं ता कधेहि कधं तए पसादिदो। (२६)

अन॥ जदो णिवत्तिदुं ण इच्छदि तदो पाएसुं पडिअ विण्णविदो मए भअवं पढमं त्ति पेक्खिअ अविण्णादतवप्पहावस्स दुहिदिजणस्स भअवदा अवराहो मरिसिदव्वो त्ति। (२७)

प्रियं॥ तदो तदो। (२८)

अन॥ तदो तेन भणिदं ण मे वअणं अण्णधाभविदुं अरिहदि किन्तु आहरणाहिण्णाणदंसणेण से सावो णिवत्तिस्सदि त्ति मन्तअन्तो ज्जेव अन्तरिदो। (२९)

---

(२५) अनेति। प्रविश्य रङ्गभूमिमिति शेषः। सहीत्यादि। सखि शरीरीव कोपः कस्यानुनयं स गृह्णाति। किञ्च पुनः सोऽनुकम्पितो मया। शरीरी मूर्त्तिमान् कोपः क्रोध इव स महर्षिः कस्यानुनयं प्रसादनं गृह्णाति ग्रहीष्यति कस्यापि नेत्यर्थः। अनुनयस्य तन्निष्पाद्यतया विवक्षितत्वात् गृह्णातीति किञ्च निपातमिति भव्ये की। मया पुनः स महर्षिः किञ्च किञ्चित् अनुकम्पितोऽनुकम्पा कारितः॥

(२६) प्रियमिति। एदमित्यादि। एतदेव तस्मिन् बहुतरं तत् कथय कथं त्वया प्रसादितः। एतदेव किञ्चिदनुकम्पनमेव तस्मिन् दुर्वाससि बहुतरं समधिकतया मन्तव्यं किञ्चिदनुकम्पनस्यैव तस्मिन् दुष्करत्वादिति भावः। प्रसादितः प्रसन्नीकृतः॥

(२७) अनेति। जदो इत्यादि। यदा निवर्त्तितुं नेच्छति तदा पादयोः पतित्वा विज्ञापितो मया भगवन् प्रथममिति प्रेक्ष्य अविज्ञाततपःप्रभावस्य दुहितृजनस्यायमपराधो भवता मर्षयितव्य इति। निवर्त्तितुमाश्रमं प्रत्यागन्तुम्। विज्ञापितो निवेदितः किमित्याकाङ्क्षायां भगवन्नित्यादि। भगवन् माहात्म्यवन्। प्रथमं प्रथममपराद्धमिति प्रेक्ष्य विविच्य अविज्ञातो अपरिचितस्तपःप्रभावो भवत्तपस्तेजःशक्तिर्वा येन स तथाभूतस्य। प्रभावः शक्तितेजसोरिति विश्वः। दुहितृजनस्य निजदुहितृनिर्विशेषस्य जनस्य। अयमपराधः अवधानरूपजनितो दोषो भवता मर्षयितव्यः सहनीयः॥

(२८) प्रियमिति। तदो तदो ततस्ततः॥

(२९) अनेति। तदो इत्यादि। ततस्तेन भणितं न मे वचनमन्यथाभवितुमर्हति

अन ॥ हला दोसं ज्जेव णो हिअए एसो वुत्तन्तो चिट्ठदु रक्खणीआ क्खु पइदिपेलवा पिअसही । (३३)

प्रियं ॥ को दाव उण्होदएण णोमालिअं सिञ्चदि । इत्युभे निष्क्रान्ते । (३४)

विष्कम्भकः । (३५)

॥ ततः प्रविशति सुप्तोत्थितः कण्वशिष्यः । (३६)

शिष्यः ॥ वेलोपलक्षणार्थमादिष्टोऽस्मि तत्रभवता प्रवासात् प्रतिनिवृत्तेन काश्यपेन तत् प्रकाशं निर्गत्यावलोकयामि कियदवशिष्टं रजन्या इति । (३७)

---

शकुन्तला तया राजन्विषयेति यावत् ॥ विभावयति परिचिनोति । विभावः स्यात् परिचितौ कामस्योद्दीपनेऽपि चेति विश्वः । आगन्तुकमतिथिम् । स्तुरानैमित्त आगन्तुरतिथि र्ना अभ्यागत इत्यर्थः ॥

(३३) अनेनेति । हलेत्यादि । सखि द्वयोरेवावयो र्हृदये एष वृत्तान्तस्तिष्ठतु रक्षणीया खलु प्रकृतिपेलवा प्रियसखी । एष वृत्तान्तः शापवृत्तान्तः । रक्षणीया न प्रकाश्या । खलु निश्चयम् । प्रकृतिपेलवा स्वभावकोमला । पेलवं कोमलमिति त्रिकाण्डशेषः ॥

(३४) प्रियमिति । को इत्यादि । कस्तावदुष्णोदकेन नवमालिकां सिञ्चति । अप्रस्तुतेन तेन प्रियसखी सम्बन्धेऽप्येतद्वृत्तान्तप्रकाशनमतीव दारुणमिति प्रस्तुतार्थस्य गम्यमानादप्रस्तुतप्रशंसाख्योऽलङ्कारोऽयम् । इति चातःपरम् ॥

(३५) विष्कम्भक इति । तदाख्योऽभिनिवेश इत्यर्थः । अतताभिनयस्यापि इत्यस्य दुर्वासोऽनुनयान्तवृत्तान्तस्य वनि प्रमानस्य च शापस्याङ्गुरीयकदर्शनावसानत्वस्य निदर्शकत्वात् मध्यमपात्राभ्यां सम्प्रयोजितत्वेन शुद्धोऽयम् । यदुक्तम् । वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः । संक्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः । मध्येन मध्यमाभ्यां वा पात्राभ्यां संप्रयोजितः । शुद्धः स्यात् स तु सङ्कीर्णो नीचमध्यमकल्पित इति । अत्र च विवाहो भोजनं शापोत्सर्गौ मृत्यूरतं तथेत्यादिना शापाभिनयस्याङ्कमध्ये निषेधात् प्रपतो दुर्वाससः प्रवेशो बाधितः सुतरामनन्तरं तदनुनयनादिकथांशोऽपि रूपणेन न दर्शितः किन्तु विष्कम्भकेनेत्यनुभाव्यम् ॥

(३६) तत इति । सुप्तोत्थितः सुप्तश्च उत्थितः । कण्वशिष्यः कण्वाध्याप्यः ॥

(३७) शिष्य इति । प्रवासात् प्रदेशान्तरात् सोमतीर्थादिति यावत् । प्रतिनिवृत्तेनागतेन

अपिच। (४०)

अन्तर्हिते शशिनि सैव कुमुद्वतीयं
दृष्टिं न नन्दयति संस्मरणीयशोभा।
इष्टप्रवासजनितान्यबलाजनेन
दुःखानि नूनमतिमात्रदुरुद्वहानि॥ (४१)

अपिच। (४२)

कर्कन्धूनामुपरि तुहिनं रञ्जयत्यग्रसन्ध्या
दार्भं मुञ्चत्युटजपटलं वीतनिद्रो मयूरः।
वेदिप्रान्तात् खुरविलिखितादुत्थितश्चैष सद्यः
पश्चादुच्चैर्भवति हरिणः स्वाङ्गमायच्छमानः॥ (४३)

---

(४०) अपिचेति। अन्वयस्त्वर्थः॥

(४१) अन्तर्हित इति। शशिनि कुमुदिनीनायके अन्तर्हिते व्यवधानं गते सति संस्मरणीया स्मरणार्हा नेदानीं दर्शनार्हेति यावत् शोभा यस्याः सा तथोक्ता सैव या तादृग् विकसिताऽभूदिति भावः। इयं कुमुद्वती कुमुदिनी दृष्टिं नेत्रं न नन्दयति न सुखयति शोभाभावादिति भावः। अतो नूनं निश्चितं इष्टस्य प्रियस्य प्रवासेन देशान्तरगमनेन जनितानि दुःखानि अबलाजनेन स्त्रीजनेन अतिमात्रदुरुद्वहानि कष्टातिशयभरणीयानि। नूनमितिपदेन एतद् द्योत्यते यदहमेव निश्चिनोमि न त्वनालोकितदाम्पत्यव्यवहारतया कदाचित् साक्षादवगतवानस्मीति गम्यते। इदमपि वसन्ततिलकं वृत्तम्॥

(४२) अपिचेति। अन्वयस्त्वर्थः॥

(४३) कर्कन्धूनामिति। अग्रसन्ध्या प्रातःसन्ध्या कर्कन्धूनां बदरीणामुपरि। कर्कन्धुर्बदरी कोलिरित्यमरः। तुहिनं तुषारं रञ्जयति रागं लम्भयति। तुषारस्तुहिनं हिममित्यमरः। रागप्रियासौ सन्ध्या तुहिनमपि लोहितभूतानां कर्कन्धूनामुपरि निधाय लोहितीकरोतीत्युत्प्रेक्षा सा चोत्प्रेक्षाव्यञ्जकेवादिपदविरहात् प्रतीयमाना। यदुक्तम्। वाच्या प्रतीयमाना सा प्रथमं द्विविधा मता। वाच्येवादिप्रयोगे स्यादप्रयोगे परा पुनरिति। तथा वीता विगता निद्रा यस्य स तथोक्तो मयूरो दार्भं दर्भैः कुशै रचितं उटजस्य पर्णशालाया पटलं छदिः गेहाच्छादनमिति यावत्। छदिर्नेत्ररुजोः क्लीबं समूहे पटलं न भेदमर। मुञ्चति जहाति भूमिमवरोहतीति यावत्। तथा खुरैर्विलिखितादुत्खनिताद् वेदि

अपिच । (४४)

पादन्यासं क्षितिधरगुरोर्मूर्ध्नि कृत्वा सुमेरोः
क्रान्तं येन क्षपिततमसा मध्यमं धाम विष्णोः ।
सोऽयं चन्द्रः पतति गगनादल्पशेषैर्मयूखै-
रत्यारूढिर्भवति महतामप्यपभ्रंशनिष्ठा ॥ (४५)

---

क्रान्तात् पादपमूलोपरचितचतुष्कोणपार्श्वात् उत्थित एव हरिणश्च सद्यःसत्त्वतो स्वाङ्गं निजावयवमायच्छमानः प्रसारयन् सन् । आयामार्थकादाङ्पूर्वकयम इत्यात्मनेपदित्वात् शानः । स्यादनन्तरमुदेति भवति । पदार्थे स्वभावोक्तिरलङ्कारः । यदुक्तं दण्डिना । नानावस्थं पदार्थानां भावं साक्षाद् विवृण्वती । स्वभावोक्तिश्च जातिश्चेत्याद्या सालङ्कृतिरिति । मन्दाक्रान्ता नाम वृत्तम् ॥

(४४) अन्यदपि वर्णयितुमाह अपिचेति ॥

(४५) पादन्यासेति । क्षपितानि क्षिप्तानि दूरं निराकृतानीति यावत् । तमांसि तिमिराणि येन स तथोक्तेन क्षपक्षयात् क्षेप इति कविकल्पद्रुमः । अत्र क्षयितेत्यपि पठन्ति तत्र क्षयोऽस्य जात इति क्षयितः । इतोऽस्य जात इति इतः । क्षयितानि क्षयं गमितानि तमांसि यस्मात् स तेनेत्यर्थः । येन चन्द्रेण क्षितिधरेषु पर्वतेषु मध्ये गुरोः श्रेष्ठस्य । गुरुस्तु गीष्पतौ श्रेष्ठे गुरुः पितरि दुर्भरे इति शब्दार्णवः । तथाच नरसिंहपुराणम् । मध्ये पृथिव्यामद्रीन्द्रो भास्वान् मेरुर्हिरण्मय इति । गुरुशब्देन पूज्यता च व्यज्यते । सुमेरोर्मूर्ध्नि शृङ्गे उपरि शिरसि पादन्यासं किरणनिक्षेपं पक्षे पादस्य चरणविन्यासं कृत्वा । पादा रश्म्यङ्घ्रितुर्यांशा इत्यमरः । विष्णोस्त्रिविक्रमस्य मध्यमं धाम मध्यमविक्रमाक्रान्तं व्योमेति यावत् क्रान्तमाक्रान्तम् । तदुक्तं वामनपुराणे । कृत्वा तु रूपं दितिजाय हृत्वा मघवत्पर्यौ प्रथमक्रमेण । महीं महीध्रैः सहितां सहार्णवां जहार रत्नाकरवृन्दैर्युताम् । ततः स नाकं त्रिदशाधिवासं सोमार्कऋक्षैरभिमण्डितं नभः । द्वितीयेन जगाम वेगात् क्रमेण देवप्रियलोकभीश्वरः । क्रमस्तृतीयो न यदास्य पूरितः कृतान्तकोपाद् दनुपुङ्गवस्य । बबन्ध पृष्ठे भगवांस्त्रिविक्रमो मेरुप्रमाणेन तु विश्वरूपीति । सोऽयं चन्द्रोऽल्पशेषैः किञ्चिन्मात्रावशिष्टैर्मयूखै रश्मिभि र्विशिष्टः सन् । विशेषणे तृतीया । गगनादम्बरतलात् पतति । महतां प्रधानभूतानामपि जनानामत्यारूढिर्दूरारोहणम् अपभ्रंशः पतनमेव निष्ठा अन्तदशा यस्याः सा तथोक्ता भवति । निष्ठा निष्पत्तिनाशान्ता इत्यमरः । यथोक्तमत्युच्चैः पतनाय चेति । अर्थान्तरन्यासः सोपमेत्यलङ्कारद्वयम् । मन्दाक्रान्ता वृत्तम् ॥

अनसूया ॥ पटीक्षेपेण प्रविश्य ॥ एव्वं णाम विसअपरम्मुहस्स जणस्स ण विदिदं जधा तेण रण्णा सउन्दलाए अणज्जं आअरिदं त्ति। (४६)

• शिष्य ॥ यावदुपस्थितां होमवेलां गुरवे निवेदयामि। इति निष्क्रान्तः। (४७)

अन ॥ णं पहादा रअणी ता सिग्घं सअणं परिच्चआमि अथवा लहु लहु उत्थिदावि किं करिस्सं ण मे उइदेसु पहादकरणीएसु हत्थ-पाआ पसरन्ति कामो दाणिं सकामो होदु जेण असच्चसन्धे जणे पिअसही सुद्धहिअआ पदं कारिदा। (४८)

स्वगत ॥ अथवा ण तस्स राएसिणो अवराहो दुव्वाससावो क्खु

---

(४६) अनेति। अल्प पट सुचेलक पटी अल्पत्वविवक्षायां ङीप् स्त्रीत्वम्। स्त्री स्थान काचिद्रुदणाल्पाद्यविवक्षायामपि पटीत्यमरः। नारीसखीत्यादिनिपातनादीप्। सुचेलक पटोऽस्त्री स्यादित्यमरः। पटी स्त्री पटभेदे स्यादिति मेदिनी। तस्याः क्षेपेण तदाच्छादनेन। एवमित्यादि। एव नाम विषयपराङ्मुखस्य जनस्य न विदितं यथा तेन राज्ञा शकुन्तलाया अनार्यमाचरितमिति। नाम कुत्सने। नाम प्राकाश्यसम्भाव्यक्रोधोपगमकुत्सने इत्यमरः। विषयेषु इन्द्रियग्राह्येषु पराङ्मुखस्य अप्रवृत्तिमतो जनस्य सम्बन्धे एवमसदाचरणं न निरूपितमुपस्थितम्। किमित्याह यथेत्यादि अनार्यं गर्हितम्। आचरितं अनुष्ठितम्। अकृतज्ञत्वादस्मादिति भावः॥

(४७) शिष्य इति। यावदवधारणे। यावत् तावच्च साकल्येऽवधौ मानेऽवधारणे इत्यमरः। उपस्थितां प्राप्तामित्यर्थः॥

(४८) अनेति। णमित्यादि। ननु प्रभाता रजनी तच्छीघ्रं शयनं परित्यजामि अथवा लघु लघु उत्थितापि किं करिष्यामि न मे उचितेषु प्रभातकरणीयेषु हस्तपादं प्रसरति काम इदानीं सकामो भवतु येनासत्यसन्धे जने प्रियसखी शुद्धहृदया पदं कारिता। ननु इव धारणद्योतकः। प्रश्नावधारणानुज्ञानुनयामन्त्रणे नन्वित्यमरः। प्रकृष्टं भातं प्रकाशो यस्याः सा प्रभाता अल्पावशेषा इति यावत्। लघु लघु शीघ्रं शीघ्रम्। उचितेषु अभ्यस्तेषु। अभ्यस्तेऽप्युचितं न्याय्यमिति यादवः। प्रभातकरणीयेषु प्रातःकृत्येषु। कामः कन्दर्पः। सकामः पूर्णकामः। येन हेतुना कामेन वा। असत्यसन्धे असत्यप्रतिज्ञे। सन्धा प्रतिज्ञा मर्यादेत्यमरः। पदं व्यवसायम्। पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुष्वित्यमरः। एष एव कामस्य मनोरथ आसीदिति भावः॥

अन॥ सविस्मयम्॥ सहि कधं विअ। (५२)

प्रिय॥ सुणाहि दाणिं ज्जेव सुहसुत्तिआपुच्छणणिमित्तं सउन्दलाए सआसं गदम्हि। (५३)

अन॥ तदो तदो। (५४)

प्रिय॥ तदो ण लज्जावणदमुहीं परिस्सजिअ तादकस्सवेण एव्वं अहिणन्दिदं वच्छे दिट्ठिआ धूमोवरुद्धदिट्ठिणोवि जअमाणस्स पावअस्स ज्जेव मुहे आहुदी णिवडिदा सुसिस्सपरिदिण्णा विअ विज्जा असोअणीआसि मे संवुत्ता अज्ज ज्जेव तुमं इसिपरिरक्खिदं करिअ भत्तुणो सआसं विसज्जेमि त्ति। (५५)

---

कौतूहलं निर्वर्त्तयितुम्। प्रस्थाने भर्त्तृभवनयात्रायां यत् कौतूहलम् अत्यभिलाषस्तन्निर्वर्त्तयितुं समापयितुम्॥

(५२) अनेति। सविस्मयं कथमेव स वृत्तमिति विस्मयेनेत्यर्थः। सहीत्यादि। सखि कथमिव॥

(५३) प्रियमिति। सुणेत्यादि। शृणु इदानीमेव सुखसुप्तिकाप्रच्छननिमित्तं शकुन्तलायाः सकाशं गतास्मि। सुखसुप्तिका सुखेन निद्रा तस्याः प्रच्छननिमित्तं जिज्ञासार्थं। सकाशं समीपम्॥

(५४) अनेति। तदो तदो ततस्ततः॥

(५५) प्रियमिति। तदो इत्यादि। ततः एनां लज्जावनतमुखीं परिष्वज्य तातकण्वेनैवमभिनन्दितं वत्से दिष्ट्या धूमोपरुद्धदृष्टेरपि यजमानस्य पावकस्यैव मुखे आहुतिर्निपतिता सुशिष्यपरिदत्तेव विद्या अशोचनीयासि मे संवृत्ता। अद्यैव त्वामृषिपरिरक्षितां कृत्वा भर्त्तुः सकाशं विसर्जयामि। एनां शकुन्तलाम्। परिष्वज्य आलिङ्ग्य। आलिङ्गनं परिष्वङ्गः संश्लेष उपगूहनम्। अङ्कपालिः परीरम्भः क्रोडीकृतिरिति हेमचन्द्रः। एवमभिनन्दितमित्यभिनन्दितम्। तत्प्रकारस्तु वत्से इत्यादि दर्शितेत्यन्तम्। वत्से पुत्रि। वत्सस्तर्णकपुत्रादिर्वर्षे वत्सन्तु वक्षसीति विश्वः। दिष्ट्या आनन्दे। दिष्ट्या समुपजोषञ्चेत्यानन्दे इत्यमरः। धूमेति। धूमेन उपरुद्धा व्याहता दृष्टिर्दर्शनं यस्य स तस्य। यजमानस्य होतुः। अत्र पावकपातोचिताया आहुतेरनन्यत्रपातात् योग्यकर्मणा प्रयोजितेनेन समालङ्कारः। यदुक्तं दर्पणे। समं स्यादानुरूप्येण श्लाघायोग्यस्य वस्तुनः इति

अन॥ सहि केण उण आचक्खिदो तादकस्सवस्स वुत्तन्तो। (५६)

प्रियं॥ अग्गिसरणं पविट्ठस्स किल शरीरं विणा छन्दोमईए वाआए। (५७)

अन॥ सविस्मयम्॥ कधं विअ। (५८)

प्रियं॥ सुणाहि। (५९)

संस्कृतमाश्रित्य॥ (६०)

दुष्यन्तेनाहितं तेजो दधानां भूतये भुवः।
अवेहि तनयां ब्रह्मन्नग्निगर्भां शमीमिव॥ (६१)

अन॥ प्रियंवदामाश्लिष्य॥ सहि पिअं मे पिअं किन्तु अज्ज

---

सुशिष्येण सत्कात्येव परिगृहीता अधिगता विद्येव त्वं मे अशोचनीया न दुःखहेतुः संवृत्तासि। अत उक्तम्। सुशिष्यमध्यापयतः कुतो यश इति। विसर्जयामि प्रेरयामि। इति अभिनन्दितमित्यन्वितम्॥

(५६) अनेति। सहीत्यादि। सखि केन पुनराख्यातस्तातकण्वस्याय वृत्तान्तः। आख्यात उक्तः॥

(५७) प्रियमिति। अग्गीत्यादि। अग्निशरणं प्रविष्टस्य किल शरीरं विना छन्दोमय्या वाचा। अग्निशरणमाहिताग्नीनामग्न्यागारम्। शरणं गृहरक्षित्रोरित्यमरः। किलेति वार्त्तायाम्। वार्त्तासम्भाव्ययोः किलेत्यमरः। शरीरादेव वाक् प्रत्यक्षीभवति अत्र तु न तथेत्याह शरीरं विनेति। अदृश्यमानशरीरयेत्यर्थः दैव्येति यावत्। छन्दोमय्या पद्यात्मिकया। छन्दः पद्ये ऽभिलाषे चेत्यमरः। वाचा आख्यात इत्यनुषङ्गः॥

(५८) अनेति। कधं विअ कथमिव॥

(५९) प्रियमिति। सुणाहि शृणु॥

(६०) संस्कृतेति। संस्कृतं वचनमिति शेषः॥

(६१) दुष्यन्तेनेति। हे ब्रह्मन् विप्र। ब्रह्मा विप्रः प्रजापतिरित्यमरः। दुष्यन्तेन राज्ञा आहितं गर्भाधानमर्पितमिति यावत्। तेजः उपमाने सौमाद्रक्षाय स्वोपाद दीप्तिं वस्तुतः शुक्रम्। तेजः प्रभावे दीप्तौ च बले शुक्रे ऽपीत्यमरः। भुवो भूमेर्भूतये सम्पत्त्यै। भूतिर्भस्मनि सम्पत्तौ हस्तिशृङ्गारयोः स्त्रियामिति मेदिनी। दधानां बिभ्रतीं तनयाम् अग्निं गर्भे अभ्यन्तरे यस्याः सा तथोक्तां शमीं तद्विशेषमिव अवेहि अवगच्छ। वह्निरक्षणेषु शमीमाश्रमन्तःप्रविष्टो ज्वलतीति प्रसिद्धिः। उपमालङ्कारः॥

ज्जेव सउन्तला णीअदि त्ति उक्कण्ठासाहारणं परितोसं णाम
अणुभवेमि। (६२)

प्रिय॥ सहि आह्मे कधं पि उक्कण्ठं विणोदइस्सामो सा दाणिं तवस्सिणी णिव्वुदा होदु। (६३)

अन॥ तेण हि एदस्सिं चूअसाहावलम्बिदे णारिएलसमुग्गए एट-णिमित्तं ज्जेव मए कालहरणक्खमा केसरगुण्डा णिक्खित्ता चिट्ठदि ता इमं णलिणीवत्तसङ्गदं करेहि जाव से अहं पि गोरोअणं तित्थमित्तिअं दुव्वाकिसलआइं मङ्गलसमालहणं विरएमि। (६४)

---

(६२) अनेति। अनसूया अनिन्द्या। सखीत्यादि। सखि प्रिय मे प्रिय किन्त्वद्यैव शकुन्तला नीयत इत्युत्कण्ठासाधारणं परितोषमनुभवामि। नीयते भर्तृगृहं प्राप्यते। उत्कण्ठासाधारणमुत्कण्ठया सहितं। यथोत्कण्ठा तथा परितोषमनुभवामीत्यर्थः॥

(६३) प्रियमिति। सखीत्यादि। सखि आवां कथमप्युत्कण्ठां विनोदयिष्याव इदानीं तपस्विनी निर्वृता भवतु। कथमपि कष्टसृष्ट्या उत्कण्ठा अदृष्टमजनितमनोवेदनाम्। रागे त्वलब्धविषये वेदना महती तु या। स शोचनी तु गात्राणां तामुत्कण्ठां विदुर्बुधा इत्युक्ते। विनोदयिष्यामो यापयिष्यामः। तपस्विनी अनुकम्पार्हा। तपस्वी तापसे चानुकम्पार्हे चेति विश्वः। निर्वृता सुखिता। निर्वृति सुखितास्तगमने च द्वयोः स्त्रियामिति मेदिनी॥

(६४) अनेति। तेणेत्यादि। तेन हि एतस्मिन् चूतशाखावलम्बिते नारिकेलसमुद्गके एतन्निमित्तमेव मया कालहरणक्षमा केशरगुण्डा निक्षिप्ता तिष्ठति तदिमां नलिनीपत्रसङ्गतां कुरु यावदस्या अहमपि गोरोचनां तीर्थमृत्तिकां दूर्वाकिसलयानि मङ्गलसमालम्भनं विरचयामि। चूतशाखावलम्बिते आम्रशाखायामवस्थापिते। नारिकेलसमुद्गके नारिकेलस्य सम्पुटके खोल इति प्रसिद्धे। समुद्गकः सम्पुटक इत्यमरः। केशरगुण्डा नागकेशरकुसुमरेणुः। चाम्पेयः केशरो नागकेशरः काञ्चनाह्वय इत्यमरः। गुण्डेति गुडिक वेष्टे रक्षे इति कवि कल्पद्रुमः। स स्वत्वाद् इति घः। अ च स्त्रियामित्युक्ते स्त्रीत्वम्। गुडिरत्र चूर्णार्थः। अतएव अनेकार्थं स्याच्चूर्णीकरणेऽपि यथा गुण्डयति हिङ्गुल लोक इति धातुदीपिका। इमां केशरगुण्डाम्। नलिनीपत्रसङ्गतां पद्मपत्राच्छन्नां ताम्। यावत् यत्कालमभिव्याप्य। अस्याः शकुन्तलाया मङ्गलसमालम्भनमित्यनेन सम्बन्धः। दूर्वाकिसलयानि दूर्वापल्लवान्। मङ्गलाय समालभ्यते विलिप्यते अनेनेति मङ्गलसमालम्भनं मङ्गलगात्रानुलेपनमित्यर्थः। विर

अनसूया ॥ समालम्भनहस्ता प्रविश्य ॥ सहि एहि गच्छम्ह । इति परिक्रामतः । (६८)

प्रिय ॥ विलोक्य ॥ एसा सुज्जोदए सिहामज्जिदा पडिच्छिदणीवारभाअणाहिं सोत्थिवाअणिआहिं तावसीहिं अहिणन्दीअमाणाचिट्ठदि सउन्तला ता उवसप्पम्ह णं । इत्युभे तथा कुरुतः । (६९)

ततः प्रविशति यथानिर्दिष्टव्यापारा सपरिवारा शकुन्तला । (७०)

शकु ॥ भअवदीओ वन्दामि । (७१)

गौत ॥ जादे भत्तुणो बहुमाणसूअअं देवीसद्दं अहिगच्छ । (७२)

---

इत्यर्थम् । इत्यमेव रघुवंशीयअजराजविवाहसमयवर्णनप्रसङ्गेनकालिदासेन वर्णितायाम् अपि मथुरायां मङ्गलस्नानाभिधान समाधेयम् ।

(६८) अनेति । समालम्भनहस्ता विच्छित्तिहस्ता विलेपनरोचनादिहस्तेति यावत् । विच्छित्तिस्तु कथायः स्यात्समालम्भनमित्यपीति त्रिकाण्डशेषः । सहीत्यादि । सखि एहि गच्छाम ॥

(६९) प्रियमिति । विलोक्य दृष्टिमभिनीय । एसेत्यादि । एषा सूर्योदये कृतमज्जना प्रतीष्टनीवाराभिः स्वस्तिवाचनिकाभिः तापसीभिरभिनन्द्यमाना तिष्ठति शकुन्तला तदुपगच्छाव एनाम । सूर्योदये सति कृत मङ्गल स्नान सहर सा । एतच्च सूर्योदय विना नैव स्नानदानादिकाक्रियेति । प्रतीष्टनीवाराभिर्गृहीतहस्तधान्यतण्डुलाभिः । स्वस्ति आशीस्तद्वाचनार्थे क्रिया स्वस्तिवाचनिका । क्रियार्थे कर्ण । ताभिः । स्वस्त्यायनी क्षेमयुक्तादार्वित्यमरः । अभिनन्द्यमाना आद्रियमाणा । तथाकुरुत उपगच्छत ॥

(७०) तत इति । यथेति कृतस्नानेत्यर्थः । सपरिवारा तापसीभिः परिवृता ॥

(७१) शकु इति । भअवदीत्यादि । भगवतीर्वन्दे प्रणमामि ॥

(७२) गौतमीति । जाद इत्यादि । जाते भर्तुर्बहुमानसूचकं देवीशब्द--मधिगच्छ । जाते पुत्रि । भर्तुर्बहुमानेनादरेण यत्सूचकं तस्य सूचक सूअ

तापस्यः ॥ वीरप्पसविणी होहि । इत्याशिषो दत्त्वा गौतमीवर्ज्जं सर्व्वा निष्क्रान्ताः । (७३)

सख्यौ ॥ उपगम्य ॥ सुमज्जणं दे भूदं । (७४)

शकु ॥ साअदं पिअसहीणं इदो णिसीदध । (७५)

सख्यौ ॥ उपविश्य ॥ हला उज्जुआ दाव होहि जाव दे मङ्गलसमालहणं करेम्ह । (७६)

शकु ॥ बहुदं पि एदं अज्ज बहुमणिदव्वं जदो दुल्लहं दाव पुणो मे पिअसहीमण्डणं भविस्सदि । इति बाष्पं विसृजति । (७७)

---

देवीशब्दं देवीति संज्ञानमिमिच्छ लभस्व । एतत् कृताभिषेका महिषी भवेत्यर्थः । देवी कृताभिषेकायामितरासु च भट्टिनीत्यमरः ॥

(७३) तापस्य इति । वीरेत्यादि । वीरप्रसविनी भव । वीरं विक्रान्तं प्रसवितुं शीलं यस्याः सा वीरप्रसविनी । ग्राहादेरिणिनिति इनुः । शूरो वीरश्च विक्रान्त इत्यमरः । गौतमीवर्ज्जं गौतमीं वर्ज्जयित्वा । द्वितीयायां चोपपदायामिति णमुल्प्रत्ययः । सर्वा आनुष्ठते सर्वाश्च । तथा नैष्कम्यन्ते सपर्य सर्वशब्दो रति- क्रियेति कामन्दकः ॥

(७४) सख्याविति । उभेत्यादि । सुमज्जनं ते भूतम । सुमज्जनं मङ्गलस्नानं दर्शनीयमिति यावत् ।

(७५) शकु इति । स्वागतमित्यादि । स्वागतं प्रियसख्योः इतो निषीदताम । स्वागतं सुखेनागमनम् । प्रियसख्योरिति भावक्तान्तेन कर्त्तरि षष्ठी । अन्योऽयम । इतोऽस्मिन् निषीदतमुपविशतम् ।

(७६) सख्याविति । हलेत्यादि । अयि ऋजुका तावद्भव यावत्ते मङ्गलसमालम्भनं कुर्व । ऋजुका अवक्रा । यावत् यत्कालमभिव्याप्य । मङ्गलसमालम्भन मङ्गलार्थगात्रानुलेपनम ॥

(७७) शकु इति । बहुदमित्यादि । उचितमप्येतदद्य बहुमन्तव्यं यतो दुर्लभं तावत् पुनर्मे प्रियसखीमण्डनं भविष्यति । उचितमभ्यस्तम । अभ्यस्तेऽप्युचित न्याय्यमिति यादवः । एतत् गात्रानुलेपनम् । बहुमन्तव्यं समादरणीयम् । मे इत्यस्य

सख्यौ ॥ सहि ण जुत्तं मङ्गलकाले रोदिदुं । इत्यश्रूणि प्रमृज्य नाट्येन प्रसाधयतः । (७८)

प्रियं ॥ सहि आहरणोचिदं दे रूवं अस्समसुलहेहिं पसाहणेहिं विप्पआरीअदि । (७९)

प्रविश्य आभरणहस्तः ऋषिकुमारः ॥ इदमलङ्कारजातमलङ्क्रियतामायुष्मती । (८०)

सख्यौ विलोक्य विस्मिते । (८१)

---

प्रियसखीमङ्गलमित्यनेनान्वयो न तु दुर्लभमित्यनेनापि एवमस्य कर्त्तरि षष्ठी प्रतिषेधात् । प्रियसखीमङ्गलं प्रियसख्याः वेशरचनम् । बाष्पं अश्रु । बाष्पावश्रुणी इत्यमरः । विसृजति त्यजति ॥

(७८) सख्याविति । सहीत्यादि । सखि न युक्तं मङ्गलकाले रोदितुं । मङ्गलकाले मङ्गलसमाचरणकाले । अश्रूणि नेत्राम्बूनि । अस्रं नेत्राम्बु रोदनञ्चास्रमश्रु च इत्यमरः । प्रसाधयतः वेशं रचयतः ॥

(७९) प्रियमिति । सहीत्यादि । सखि 'आभरणार्हं' ते रूपं आश्रमसुलभैः प्रसाधनैर्विप्रकार्यते । आभरणार्हमलङ्कारार्हम् । यदाभरणेनैव शोभत इति भावः । आश्रमसुलभैराश्रमे विनायासेन लभ्यैः । प्रसाधनैः प्रसाध्यते येन क्रियते यैस्तैः कर्तृभिः । आकल्पवेशौ नेपथ्यं प्रतिकर्म प्रसाधनमित्यमरः । विप्रकार्यते लोकनिकारं नीयते । निकारो विप्रकारः स्यादित्यमरः ।

(८०) प्रविश्येति । प्रवेशात्प्रागसन्निहितानामागन्तुकादौ प्रविश्येति यथा-ह्युक्तिनिर्देशः । प्रविष्टपूर्वतया श्रुतवृत्तान्ततया चानुभावबलेन प्रवेशात्प्रागप्यनुभवात्तु युक्तोऽन्यत्र प्रथम व्यक्तिसन्देशः । अलङ्कारजातमाभरणसमूहः । एतेन प्रदर्शयति । जातं व्यक्तौ जनुष्यपि इति मेदिनी । अलङ्क्रियतां भूष्यताम् । आयुष्मती आयुः प्रशस्तिमती । प्रकृष्टेत्यर्थः ।

(८१) सख्याविति । विस्मिता जातविस्मया ।

गौत ॥ अच्छ हारीद कुदो इदं आसादिदं । (८२)

हारी ॥ तातकण्वप्रभावात् । (८३)

गौत ॥ किं माणसी सिद्धी । (८४)

हारी ॥ न खलु श्रूयतां तत्रभवता कण्वेन वयमाज्ञप्ताः शकुन्तलाहेतोर्वनस्पतिभ्यः कुसुमान्याहरतेति । ततश्च । (८५)

क्षौमं केनचिदिन्दुपाण्डु तरुणा माङ्गल्यमाविष्कृतं
निष्ठ्यूतश्चरणोपरागसुभगो लाक्षारसः केनचित् ।
अन्येभ्यो वनदेवताकरतलैरापर्व्वभागोत्थितै-
र्दत्तान्याभरणानि नः किसलयच्छायापरिस्पर्द्धिभिः ॥(८६)

---

(८२) गौतेति । अच्छेत्यादि । अच्छ हारीत कुतः इदमासादितम् । कुतः कस्मात् । इदमलङ्कारजातम् । आसादितं लब्धम् ।

(८३) हारीति । तातकण्वप्रभावात् अस्मत्पितृकण्वस्य महर्षेः शक्तिहेतोः । आसादितमित्यनुषङ्गः । प्रभावः शक्तितेजसोरिति विश्वः ।

(८४) गौतेति किमित्यादि । किं मानसी सिद्धिः । मानसी मनःकृता । सिद्धि निष्पत्तिः । सिद्धिर्निष्पत्तियोगयोरिति विश्वः । अलङ्कारजातस्येति शेषः ।

(८५) हारीति । न खलु नैव । मानसी निष्पत्तिरिति शेषः । शकुन्तलाहेतोः शकुन्तलाप्रसाधनार्थम् । वनस्पतिभ्यो वृक्षेभ्यः । वनस्पतिर्द्रुममात्रे इति विश्वः । आहरत आनयत । इति आज्ञप्ताः वयमित्यन्वयः । ततः किमित्यपेक्षायां ततश्चेति ।

(८६) क्षौममिति । केनचित् तरुणा वृक्षेण इन्दुवत् चन्द्रमण्डलवत् पाण्डु सितपीतम् । सितपीतसमायुक्तः पाण्डुवर्णः प्रकीर्त्तित इति शुभूतिः । माङ्गल्यं मङ्गलकर्मणि हितं क्षौमं दुकूलं । क्षौमं दुकूलमित्यमरः । आविष्कृतं प्रकाशितम् । तथा केनचित् तरुणा अलक्तकादिना चरणयोरुपरागे रञ्जने सुभगः सुन्दरः । सुन्दरेऽधिकभाग्ये च दुर्दिनेतरवासरे । वरीयसि श्रीमति च सुभग इति शब्दार्णवः । लाक्षारसो लाक्षाद्रवो निष्ठ्यूत उद्गीर्णः । रक्तारादौ स्त्रिये वीर्ये शुभे रागे

प्रियं॥ शकुन्तलां विलोक्य॥ हला कोडरसम्भवावि महुअरी पोक्खरमहुं ज्जेव अहिलसदि। (८७)

गौत॥ जादे दुमाए अब्भुववत्तीए सूइदा भत्तुणो गेहे अणुहोदव्वा रायलच्छी। (८८)

शकु॥ लज्जां नाटयति। (८९)

हारी॥ यावदिमां वनस्पतिसेवामभिषेकार्थं मालिनीमवतीर्णाय तत्रभवते कण्वाय निवेदयामि। इति निष्क्रान्तः। (९०)

---

द्रुवे रह इत्यमरः। तथा अन्येभ्य वृक्षेभ्य आपर्वभोगं मणिबन्धपर्यन्तं उत्थितैरुद्गतैः किसलयस्य पल्लवस्य छायां कान्तिं परिस्पर्धितमनुकर्तुं शीलं येषां ते तैः किसलयच्छायापरिस्पर्धिभिः। छाया सूर्यप्रियाकान्तिप्रतिबिम्बमनातप इत्यमरः। वनदेवताया करतलैः कर्तृभिः भोगाभ्युदयम् आभरणानि दत्तानि। वृत्तं शार्दूलविक्रीडितं नाम।

(८७) प्रियमिति। हलेत्यादि। अयि कोटरसम्भवापि मधुकरी पुष्करमध्वेवाभिलषति। कोटरसम्भवापि काष्ठादिविवरसम्भवापि पुष्करस्य पद्मस्य मधु। विसप्रसूनराजीवपुष्कराम्भोरुहाणि चेत्यमरः। तथाऽरण्यसम्भवापि त्वमाभरणान्यास्वादयसीति गम्यते।

(८८) गौतेति। जादेत्यादि। जाते अनया अभ्युपपत्त्या सूचिता भर्तुर्गेहे अनुभवितव्या राजलक्ष्मी। अनया अभ्युपपत्त्या उपयोगदशायामेव सौभाग्याविष्कारणात्मकानुग्रहेण वनस्पतीनामिति शेषः। अभ्युपपत्तिरनुग्रह इत्यमरः। सूचिता अनुमापिता भर्तुर्गेहे राजलक्ष्मी राजसम्पत् अनुभवितव्या उपभोक्तव्या। उपलम्भस्त्वनुभव इत्यमरः॥

(८९) शकु इति। सुगमम्॥

(९०) हारीतेति। वनस्पतिसेवां वनस्पतिदत्तोपहारम् [illegible] स्नानार्थं। अवतीर्णाय गताय॥

अन॥ सहि अणणुभूदभूसणो अअं जणो कधं तुमं अलङ्करेदि। (८१)

चिन्तयित्वा विलोक्य च॥ चित्तपरिचएण दाणिं दे अङ्गेसु आहरणविणिओअं करेम्ह। (८२)

शकु॥ जाणामि वो णिउणत्तणं (८३)

सख्यौ॥ नाट्येनालङ्कारान् विनियुञ्जाते। (८४)

ततः प्रविशति स्नानोत्तीर्णः कण्वः। (८५)

कण्व॥ विचिन्त्य। (८६)

यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया
अन्तर्बाष्पभरोपरोधि गदितं चिन्ताजडं दर्शनम्।
वैक्लव्यं मम तावदीदृशमपि स्नेहादरण्यौकसः
पीड्यन्ते गृहिणः कथं न तनयाविश्लेषदुःखैर्नवैः॥ (८७)

---

(८१) अनेति। सहीत्यादि। सखि अननुभूतभूषणोऽयं जन कथं त्वां अलङ्करोति। अननुभूतभूषणः अदृष्टभूषणः॥

(८२) चिन्तयित्वेति। चिन्तयित्वा अनुमाय। विलोक्य आभरणानि अङ्गानि च दृष्ट्वा। चित्तेति। चित्तपरिचयेनेदानीं ते अङ्गेष्वाभरणविनियोगं कुर्मः। चित्तस्य मनसः। परिचयेन ज्ञानेन। मनसा यथावधार्यते तथेत्यर्थः। आभरणानां विनियोगं यथास्थाननिवेशम्॥

(८३) शकु इति। जाणेत्यादि। जानामि वो निपुणत्वम्। निपुणत्वमभिज्ञत्वम्। मदीये निपुणाभिज्ञविज्ञतनिष्ठामतिमिता इत्यपरः॥

(८४) सख्याविति। नाट्येन अङ्गप्रदर्शनेन। विनियुञ्जाते परिधापयतः॥

(८५) तत इति। स्नानोत्तीर्णः स्नानानन्तरं सलिलात् उत्तीर्णः॥

(८६) कण्व इति। विचिन्त्य शकुन्तलागमनानुमतिं कृत्वा॥

(८७) यास्यतीति। अद्य शकुन्तला यास्यति भर्तृगृहमितिशेषः। इतिहेतो हृदयं मम उत्कण्ठया प्रगाढचिन्तया संस्पृष्टमधिक्रान्तम्। तथा गदितं वचनं अन्तर्बाष्पो

इति परिक्रामति । (९८)

सख्यौ ॥ हला सउन्तले अवसिदमण्डणासि सम्पदं परिहेहि खोमजुअलं । (९९)

शकु ॥ उत्थाय ॥ क्षौमे परिधत्ते । (१००)

गौत ॥ जादे एस दे आणन्दवाप्पपरिवाहिणा लोअणेण परिस्सजन्तो विअ गुरू उवत्थिदो ता समुदाआरं पडिवज्जस्स । (१०१)

शकु ॥ सव्रीडं वन्दनां करोति । (१०२)

---

यो वाम्यापाम्नभूपा भरोऽतिशयवत्तस्य उदरोधि तद्वेश्याधारवत । अयाति-शयोभर इत्यमर । तथा दर्शन नयन विमयात् ककु कर्मावमम । अरण्य-मोक्ष एव यस्य स तपोकाय । यांक सद्मान्यवधौ इत्यमर । ममापि तावत् स्नेहादीदृश वैक्लव्यं विह्वलता विक्लवो विह्वल इत्यमर । गृहिणो गृहस्था नवै प्रथमाभिभूतैस्तनयाविश्लेषदु खै तनयया सुतया विश्लेषात् वियोगात् यानि दु खानि तै कथ न पीड्यन्ते क्लिश्यन्ते गुरुमेव पीड्यन्त इति भाव ॥

(९८) इतीति । सुगमम ॥

(९९) सख्याविति । हलेत्यादि । अयि शकुन्तले अवसितमण्डनासि साम्प्रत परिधेहि क्षौमयुगलम् । अवसितमण्डना समाप्तभूषणक्रिया । अलङ्कारस्त्वाभरण परिष्कारो विभूषणम् । मण्डनञ्चेत्यमर ॥

(१००) शकु इति । परिधत्ते क्षौमयुगलमिति शेष ॥

(१०१) गौतेति । जादेत्यादि । जाते एष ते आनन्दवाष्पपरिवाहिणा लोचनेन परिष्वजमान इव गुरुरुपस्थित तत्समुदाचार प्रतिपद्यस्व । आनन्दवाष्पा आनन्दोद्गताश्रूणि तान् परिवहतीत्यानन्दवाष्पपरिवाहि तेन । शोकवाष्पोऽक्षिखे दुःखितैरपि शोके द्विगुणोभविष्यतीत्यानन्दवाष्पपदम । लोचनेन परिष्वजमान नेत्रेणालिङ्गन् प्रगाढदृष्टिप्रसारणया विषयीकुर्वन्निति यावत । समुदाचार समुचिता चार वन्दनमिति यावत् । प्रतिपद्यस्व प्राप्नुहि कुर्व्विति यावत् ॥

(१०२) शकुइति । सव्रीड सलज्जम ॥

अमी वेदिं परितः क्लृप्तधिष्ण्याः
समिद्वन्तः प्रान्तसंस्तीर्णदर्भाः ।
अपघ्नन्तो दुरितं हव्यगन्धै-
र्वैताना स्त्वां वह्नयः पावयन्तु ॥ (१०९)

यज्ञ ॥ प्रदक्षिणं करोति । (११०)

---

(१०९) अमी इति । वेदिं परित वेद्याः सर्वतः । धिक्समयेति द्वितीया । क्लृप्तानि निर्दिष्टानि धिष्ण्यानि स्थानानि येषां ते । धिष्ण्या स्थानाग्निसद्मक्षिति मेदिनी । तथा समिद्वन्तो दत्तकाष्ठसमिधः । तथा प्रान्तेषु पार्श्वचतुष्टयेषु संस्तीर्णा कृतास्तरणा दर्भाः कुशा येषां ते । तथा हव्यानां देवोद्देशेन दत्तानां गन्धै दुरितं पापमपघ्नन्तः नाशयन्तः । हव्यकव्ये दैवपैत्र्ये इत्यमरः । वैताना यज्ञियाः । क्रतुविस्तारयोरस्त्री वितान मित्यमरः । वह्नयः सन्तानितास्त्वां पावयन्तु शुद्धिं नयन्तु । अत्र प्रथमतृतीयपादौ वातोर्म्याः । द्वितीयचतुर्थपादौ शालिन्या इत्युपजातिर्नाम वृत्तम् । तदुक्तम् । अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः । इत्थं किलान्यास्वपि मिश्रितासु वदन्ति जातिष्विदमेव नामेति । अतएव पिङ्गलाचार्यच्छन्दवृत्तावुपजातिप्रकरणे तथा शालिनीवातोर्मी-पादयोरन्येषामल्पभेदानामपि प्रयोगानुसारेणोपजातयो द्रष्टव्या इति हलायुधे-नोक्तम् । यद्यपि प्रथमतृतीयपादयोर्वातोर्मीपादत्वाङ्गीकारे द्वितीयपादस्य च शालिनीपादत्वाङ्गीकारे तेषां लघुपूर्वकत्वमनुचित मिव प्रतिभाति । वातो-र्मीयं गदिताम्भौ तगौ ग इति वातोर्मीलक्षणात् मात्तौ गौ चेच्छालिनी वेद-वेदै इति शालिनी लक्षणाच्च । तथापि वेदे तयोर्लघुपूर्वकताया अपि बहुश-उपलम्भात् वेदाध्ययनाध्यापनाभ्यामालोचितश्रुतेः कवेः वैदिकवत् प्रयोग समुचितएव । तथाच प्रथमतृतीयपादौ अजोह्वेको युधमाशोतुमेते इति अपो-भिषा वह्नुर्धर्कोऽत्य गच्छन्नित्यादि वैदिकवत् । द्वितीयपादश्च जन्मैर्मां भुक्तभोगाय-जोऽन्य इति अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितम्मन्यमाना इत्यादि वैदिकवत् द्रष्टव्यः ॥

(११०) यज्ञ इति । सुगमम् ॥

कण्वः ॥ वत्से प्रतिष्ठस्वेदानीम्। (१११)

ऊर्द्ध्वदिश्येवम् ॥ क्व नु ते शार्ङ्गरवशारद्वतमिश्राः। (११२)

शिष्यौ ॥ प्रविश्य ॥ भगवन्निमौ स्वः। (११३)

कण्व ॥ वत्सौ भगिन्याः पन्थानमादेशयतम्। (११४)

शिष्यौ॥ इत इतो भवती। (११५)

सर्व्वे परिक्रामन्ति ॥ (११६)

कण्व ॥ भो भोः सन्निहितवनदेवतास्तपोवनतरवः। (११७)

पातुं न प्रथमं व्यवस्यति जलं युष्मास्वसिक्तेषु या
नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम्।
आद्ये वः कुसुमप्रसूतिसमये यस्या भवत्युत्सवः
सेयं याति शकुन्तला पतिगृहं सर्व्वैरनुज्ञायताम् ॥ (११८)

---

(१११) कण्व इति। प्रतिष्ठस्व गच्छ। प्रस्थानं गमनं समदृत्सर। प्रतिष्ठा निर्णयप्रकाशे संप्रव्यवात्स्थस्त्वात्मनेपदम्॥

(११२) ऊर्द्धेति। ऊर्द्ध्वदिश्येवमित्यस्ततो दृष्टिं पातयन्नित्यर्थः। ते प्रागादिष्टा इत्याशयः। शार्ङ्गरवशारद्वतमिश्रा नु क्व कुत्र गताः। नु पृच्छायाम्॥

(११३) शिष्याविति। इमौ कण्ठागतौ आवां स्वो वर्त्तावहे॥

(११४) कण्व इति। भगिन्याः शकुन्तलायाः।

(११५) शिष्याविति। अत्र मनुः। परपत्नी तु या स्त्री स्यादसम्बन्धा च योनितः। तां ब्रूयाद्भवतीत्येवं सुभगे भगिनीति चेति॥

(११६) सर्व्वे इति। सुगमम्॥

(११७) कण्व इति। सन्निहितेति। सन्निहिता उपस्थिता वनदेवता वनाधिष्ठात्री देवता येषु ते तथोक्ताः॥

(११८) पातुमिति। युष्मासु असिक्तेषु अकृतजलसेकेषु या शकुन्तला जलं प्रथमं पातुं न व्यवस्यति नेच्छति। अपिबन्ती पिबत्यपीतेष्विति मल्लिनाथसम्मतः पाठः किरातार्ज्जुनीयटीकायां दृष्टः तस्मात् प्रकर्षणाया अपि कर्म्मादिवक्षाया-

आकाशे ॥ रम्यान्तरः कमलिनीहरितैः सरोभि-
च्छायाद्रुमैर्नियमितार्कमरीचितापः ।
भूयात्कुशेशयरजोमृदुरेणुरस्याः
शान्तानुकूलपवनश्च शिवश्च पन्थाः ॥ (११९)

सर्वे ॥ सविस्मयमाकर्णयन्ति । (१२०)

---

सकर्मकत्वात्कर्तरि क्तो भावक्तान्तादर्श आदित्वादमुत्वयो वा तत्त्वार्थप्रतिपादक । असन्मते तु श्रीव्यगत्यदनार्थाङ्खेषेति चकारेण कर्मभावकर्तृषा तत्तद्वयात्पानस्य चादनार्थान्तर्गतत्वात्कर्तरि क्त समाधानतत् । या प्रिय प्रीतिकर मण्डन भूषणं यस्या वा तथोक्तापि त्वं स्नेहेन स्नेहना भवता प्रथम गादत्ते भूषणाय न त्वङ्गाति । आदादोऽस्मप्रवार इत्यात्मनेपदम् । यस्या मञ्जुलतोऽभ्या वो युष्माकमादौ प्रथमे कुसुमप्रसवसमये कुसुमाना पुष्पाणा प्रवृत्तेरुद्गमस्य समये उत्सव परमानन्दो भवति । सेयं शकुन्तला पतिगृहं याति सर्वैरनुज्ञायतामनुमन्यताम् । वृत्तं शार्दूलविक्रीडितम् ॥

(११९) आकाशे इति । कोऽपि वनदेवताविशेष ऊर्ध्वं पठन् तदानीं वस्तुतो भूतामाकाशवाणीं रूपयति रम्येति । अस्याः शकुन्तलायाः पन्था गतिभूमि कमलिनीभि पद्मिनीभि हरितैः पालाशवर्णैः पालाशोहरितो हरिदित्यमर । सरोभि कासारैः रम्यं मनोहरमन्तरं मध्यं यस्य स । रम्यं मनोरम इति विश्व । तथा छायाप्रधाना द्रुमास्तरवश्छायाद्रुमा । शाकपार्थिवादित्वान्मध्यपद-लोप । तैर्नियमित प्रशमितोऽर्कमरीचीनां रविकराणां तापो यस्मिन् स तथा कुशेशयानां कमलाना रजोभि परागै पवनचलितागमैरिति शेष । मृदव सुकुमारा रेणवो भूलयो यस्य स तथोक्त । रेणुर्द्वयो स्त्रियां धूलि पांशु नाँ न द्वयोरज इत्यमर । तथा शान्तो मन्दोऽनुकूलो गमनदिग्गामिश्च पवनो यत्र स तथाभूतश्च शिव कल्याणकरश्च भूयात् । आशिषि टो । तथा चोक्तम् । शान्ते मधुरशाकुपक्षी इष्ट पक्षिवितोऽप्यत । अनुकूलोवहन् वायु प्रयाणे शुभशंसिन इति । वसन्ततिलक वृत्तम् ॥

(१२०) सर्वे इति । आकर्णयन्ति शृण्वन्त्यादिगमनमिति शेष ॥

शार्ङ्ग ॥ कोकिलरवं सूचयित्वा । भगवन् । (१२१)

अनुमतगमना शकुन्तला तरुभिरियं वनवासबन्धुभि ।

परभृतविरुतं कलं यतः प्रतिवचनीकृतमेभिरात्मनः ॥ (१२२)

गौत ॥ जादे णादिजणसिणिद्धाहिं अणुणादगमणासि तवोवणदेवदाहिं ता पणाम भअवदीणं ॥ (१२३)

शकु ॥ सप्रणाम परिक्रम्य जनान्तिकम् ॥ हला पिअंवदे अज्जउत्तदंसणुस्सुआएवि अस्समपदं परिच्चअन्तीए दुक्खदुक्खेण चलणा मे पुरोमुहा ण पवट्टन्ति । (१२४)

---

(१२१) शार्ङ्गेति । सूचयित्वा आविष्कृत्य ॥

(१२२) अनुमतेति । भगवन्निति वाक्यस्तेनात्मव्यपदेन योज्यम । इयं शकुन्तला वनवासेन एकत्र अवस्थाने कारेन बन्धुभि जातसौहार्द्दैस्तरुभि रनुमतमनुज्ञात गमन यस्या सा तथोक्ता भवतीतिशेष । यत एभि स्तरुभि कल मधुरास्फुटं पदं काके भिर्यत इति परभृत कोकिल । वनप्रिय परभृतः कोकिल पिक इत्यपोत्यमर । तस्य विरुत ध्वनिमात्मन प्रतिवचनीकृत उत्तरीकृतम् । ध्वनौ तु मधुरास्फुटे कल इत्यमर । इत्तमिद सपरवक्त्रा नाम । अयुजि ननरला गुरुः समे तदपरवक्त्रमिद नजौ जरौ इति । तदुक्तस्तु प्राञ्चा ॥

(१२३) गौतेति । जादे इत्यादि जाते ज्ञातिजनस्निग्धाभिरनुज्ञातगमनासि तपोवनदेवताभिस्तत्प्रणम भगवती । ज्ञातिजनस्य तातजनस्य स्निग्धाभिः स्नेहयुक्ताभि । ज्ञातितातयोर्जनयोरिति भेदिनी । स्निग्धस्तु वत्सलोपन्न स्नेहयुक्तमने भवेदिति शब्दरत्नावली । भगवती भैरदेवता ॥

(१२४) शकु इति । जनान्तिक त्रिपताककरेणापवार्य्येत्यर्थ । हलेत्यादि । सखि प्रियंवदे आर्य्यपुत्रदर्शनोत्सुकाया अपि आश्रमपद परित्यजन्त्या दु ख-दु खेन चरणौ मे पुरोमुखौ न निपतत । आर्य्यपुत्रस्य भर्तु दर्शने उत्सुकाया उत्कण्ठितायाः । आश्रमपदमाश्रमस्थानम् । दु खदु खेनातिकष्टेन । पुरोऽप्रतो मुख ययो स्तौ सम्मुखावित्यर्थं ॥

प्रियं ॥ ण केवलं तुमं ज्जेव तवोवणविरहकादरा तुए उवट्ठिद विओअस्स तवोवणस्स वि अवत्थं पेक्ख दाव ॥ (१२५)

उग्गलिअदब्भकवला मई परिच्चत्तणच्चणा मोरी ।
ओसरिअपाण्डुपत्ता मुअन्ति अस्सुं विअ लदाओ ॥ (१२६)

शकु ॥ (स्मृत्वा) ॥ ताद लदाबहिणीं दाव माहवीं आमन्तइस्सं । (१२७)

कण्व ॥ अवैमि ते तस्यां सौहार्दं इयं सा दक्षिणेन पश्य । (१२८)

---

(१२५) प्रियमिति । पेक्खादि । न केवलं त्वमेव तपोवनविरहकातरा त्वयोपस्थितवियोगस्य तपोवनस्यापि अवस्थां प्रेक्षस्व तावत् । तपोवनस्य विरहे त्यागे कातरा अधीरा । रहत्यागे इति कविकल्पद्रुमः । त्वयेति उपस्थित आसन्नः त्वया वियोगो यस्य तत् तथोक्तस्य । अवस्थां दशाम् ॥

(१२६) तामेव दशां दर्शयति उग्गलिएति । उद्गीर्णदर्भकवला मृगी परित्यक्तनर्त्तना मयूरी । अपसृतपाण्डुपत्रा मुञ्चन्त्यश्रूणीव लता । उद्गीर्णा उद्वान्ता दर्भकवला कुशग्रासा यया सा तथोक्ता भवति मृगी । मयूरी च परित्यक्तनर्त्तना परिहृतनृत्यव्यापारा । तथा लता अपसृतानि च्युतानि पाण्डुपत्राणि परिणतपत्राणि याभ्यः ता तथोक्ताः अश्रूण्यमिव मुञ्चन्ति किरन्ति । पाण्डुपत्रापगम एव वाष्पमोक्षमित्युत्प्रेक्षितं उत्प्रेक्षालङ्कारः । इयं गाथा । तल्लक्षणं प्राकृतपिङ्गले यथा । पढमं बारहमत्ता बीए अट्ठारहेहिं संजुत्ता ॥ जह पढमं तह तीअं दहपञ्च विहूसिआ गाहा ॥ अत्र गणनियमोऽपि तत्रोक्तो यथा । सत्तगणा दीहन्ता जो ण लहू छट्ठएह णो विसमे । तह गाहे बिअ अद्धे छट्ठं लहूअं विआणेहु । सप्तगणा दीर्घान्ता जो न लघु षष्ठो नेह जो विषमे । तथा गाथाया द्वितीयार्द्धे षष्ठं लघु विजानीहि ।

(१२७) शकु इति । स्मृत्वा माधवीमितिशेषः । तादेति । तात लता-भगिनीं तावन्माधवीमामन्त्रयिष्ये । आमन्त्रयिष्ये आपृच्छे ॥

(१२८) कण्व इति । अवैमि जानामि । तस्यां माधव्याम् । सौहार्दं सुहृद्भावम् । हृदयादित्वात् उभयो पदयो रादाचो वृद्धि ।

प्रियं ॥ ण केवलं तुमं ज्जेव तवोवणविरहकादरा तुए उवत्थिद विओअस्स तवोवणस्सवि अवत्थं पेक्ख दाव ॥ (१२५)

उग्गलिअदब्भकवला मई परिच्चत्तणच्चणा मोरी ।
ओसरिअपण्डुपत्ता मुअन्ति अस्सुं विअ लदाओ ॥ (१२६)

शकु ॥ स्मृत्वा ॥ ताद लदावहिणीं दाव माहवीं आमन्तइस्सं ।
(१२७)

कण्वः ॥ वत्से अवैमि ते तस्यां सौदार्हं हृदयं सा दक्षिणेनम्ब । (१२८)

---

(१२५) प्रियमिति । णेत्यादि । न केवलं त्वमेव तपोवनविरहकातरा त्वयोपस्थितवियोगस्य तपोवनस्यापि अवस्थां प्रेक्षस्व तावत् । तपोवनस्य विरहे त्यागे कातरा अधीरा । विरहस्त्यागे इति कविकल्पद्रुमः । त्वयेति उपस्थित आसन्न त्वया वियोगो यस्य तत् तपोवनस्य । अवस्थां दशाम् ॥

(१२६) तामेव दशां दर्शयति उग्गलिअेति । उद्गीर्णदर्भकवला मृगी परित्यक्तनर्त्तना मयूरी । अपसृतपाण्डुपत्रा मुञ्चन्त्यश्रूणीव लताः । उद्गीर्णा उद्वान्ता दर्भकवला कुशग्रासा यया सा तथोक्ता भवति मृगी । मयूरी च परित्यक्तनर्त्तना परिहृतनृत्यव्यापारा । तथा लता अपसृतानि पतितान्यत एवापरत्वमारब्धवन्ति पाण्डुपत्राणि परिणतपत्राणि याभ्यस्ता तथोक्ताः अस्रं अश्रुजलमिव मुञ्चन्ति किरन्ति । पाण्डुपत्रापगम एव वाष्पमोक्षणमित्युत्प्रेक्षालङ्कारः । इयं गाथा । तल्लक्षणं प्राकृतपिङ्गले यथा । पढमं बारहमत्ता बीए अट्ठारहेहि संजुत्ता ॥ जह पढमं तह तीअं दहपञ्च विहूसिआ गाहा ॥ अत्र गणनियमोऽपि तत्रोक्तो यथा । सत्तगणा दीहन्ता जो ण लहू छट्ठओ णेह जो विसमे । तह गाहे बिअ अद्धे छट्ठ लहूअं विआणेहु । सप्तगणा दीर्घान्ता जो न लघु षष्ठो नेह जो विषमे । तथा गाथायाः द्वितीयार्द्धे षष्ठं लघुं विजानीहि ।

(१२७) शकु इति । स्मृत्वा माधवीमितिशेष । तादेति । तात लताभगिनीं तावन्माधवीमामन्त्रयिष्ये । आमन्त्रयिष्ये आलपिष्ये ॥

(१२८) वत्स इति । अवैमि जानामि । तस्यां माधव्याम् । सौदार्हं सहृद्भावम् । उपस्थाप्यादित्वात् इवो. पदयो राधयो इति ।

यक्ष ॥ उपेत्य लतामालिङ्ग्य ॥ लदाबहिणि पच्चालिङ्गस मं साहा-मएहिं वाङ्कहि अज्ज पङ्कदि दूरवत्तिणी क्खु दे भविस्स। तादं अचं विअ दूएं तुए चिन्तणीआ। (१२९)

कण्व ॥ वत्से। (१३०)

सङ्कल्पितं प्रथममेव मया तदर्थ
भर्त्तारमात्मसदृश स्वगुणैर्गतासि।
अस्यास्तु सम्प्रति वरं त्वयि वीतचिन्तः
कान्तं सखीमसहकारमिमं करिष्ये॥ (१३१)

तदितः प्रस्थानं प्रतिपद्यस्व। (१३२)

---

(१२९) यक इति। लतामित्युभयलाभ्ये ति। अद्येत्यादि। लताभगिनि मल्यालिङ्ग मां शाखामयै बाहुभि अद्यप्रभृति दूरवर्त्तिनी खलु ते भविष्यामि। तात अहमिव इयं त्वया चिन्तनीया। शाखामयै शाखात्मकै मयट् तद्रूप इति मयट्। अद्येति। अद्यप्रभृतीत्यद्येति निपातित तथाप्यत्नोमेत्यपीय सप्तमीविभक्त्यर्थं अपादान प्रभृतीत्यर्थं। अहमिव चिन्तनीया नियमज्ञमनाय चिन्तनीया॥

(१३०) कण्व इति। सुगमम्॥

(१३१) सङ्कल्पित मिति। मया प्रथम त्वदर्थमेव सङ्कल्पित चिन्तितमात्मसदृश भर्तृरूपं भर्त्तारं स्वगुणै विनयौदार्य्यादिभि हेतुभि गतासि प्राप्तासि सम्प्रति तु त्वयि वीतचिन्तो विगतभावनोऽहं कान्तं मनोहरमिमं सखीपरकारं कन्तिमह अतिशीघ्रमेवाहम्। आम्रवृतो रसालोऽसौ सहकारोऽतिसौरभ इत्यमर। अस्या माधव्या वर वोढारम्। वरौ जामातृवोढाराविति वैजयन्ती। अथवा वरं भजनीयं। वरुसभक्ताविति कविकल्पद्रुम। करिष्ये।

(१३२) तदिति। तत् तदा। इत पश्य ममेत्येति भाव। प्रस्थानं गमनम्। प्रतिपद्यस्व प्राप्नुहि।

शकु ॥ सख्यावुपेत्य ॥ हला एसा दोण्हं पि वो हत्थे णिक्खेवो । (१२३)

सख्यौ ॥ अअं जणो दाणिं कस्स हत्थे समप्पिदो । इति बाष्पं विसृजतः । (१२४)

कण्व ॥ अनसूये प्रियंवदे अलं रुदितेन ननु भवतीभ्यामेव शकुन्तला स्थिरीकर्त्तव्या । (१२५)

इति सर्वे परिक्रामन्ति । (१२६)

शकु ॥ विलोक्य ॥ ताद एसा उडअपज्जन्तचारिणी गब्भ-भारमन्थरा मिअवहू जदा सुहप्पसवा भविस्सदि तदा मे कम्पि पिअणिवेदअं विसज्जइस्ससि मा एदं विसुमरिस्ससि । (१२७)

कण्व ॥ वत्से नेदं विस्मरिष्यामि । (१२८)

---

(१२३) शकु इति । हलेत्यादि । अयि एषा द्वयोरपि युवयो र्हस्ते निक्षेप । एषा माधवी । निक्षेपो निक्षिप्ता ॥

(१२४) सख्याविति । अयमित्यादि । अयं जन इदानीं कस्य हस्ते समर्पितः । अयमित्यात्मानं निर्दिशति । युगपदेव द्वे आत्मानमात्मानं निर्दिशतीत्ययमित्येक-वचनम् । बाष्पमस्रु ॥

(१२५) कण्व इति । रुदितेनेत्यलमर्थेन तृतीया । नन्वनुनये ॥

(१२६) इतीति । इति एवमुक्ते सतीत्यर्थः ॥

(१२७) शकु इति । तातेत्यादि । तात एषा उटजपर्य्यन्तचारिणी गर्भ-भारमन्थरा मृगवधू र्यदा सुखप्रसवा भविष्यति तदा मे कमपि प्रियनिवेदकं विसर्ज-यिष्यसि मा इदं विस्मरिष्यसि । उटजपर्य्यन्ते उटजसीम्नि चरितुं शीलं यस्याः सा । गर्भस्य भारेण गौरवेण मन्थरा मन्दगामिनी । मन्दगामी तु मन्थर इत्यमरः । तदेत्यादि । तदा प्रियनिवेदकं प्रियवार्त्तावहं कमपि पुरुषं मे मम सम्बन्धे विस-र्जयिष्यसि प्रेरयिष्यसीत्यन्वयः । विस्मरिष्यसीति माङ्योगेति विकल्पात् टी ॥

(१२८) कण्व इति । सुगमम् ॥

कण्व ॥ वत्से अलं रुदितेन स्थिरा भव इत: पन्थानमालोकय । (१४३)

> उत्पक्ष्मणोर्नयनयोरुपरुद्धवृत्तिं
> बाष्पं कुरु स्थिरतया शिथिलानुबन्धम् ।
> अस्मिन्नलक्षितनतोन्नतभूमिभागे
> मार्गे पदानि खलु ते विषमीभवन्ति ॥ (१४४)

शिष्यौ ॥ भगवन्नोदकान्तं स्निग्धोऽनुगम्यत इति श्रूयते तदिदं सरस्तीरम् अत्र नः सन्दिश्य प्रतिगन्तुमर्हसि । (१४५)

---

यपि मया विरहितं तात त्वां चिन्तयिष्यसि तन्निवर्तस्व । अहेति । उटजपार्श्वमेकत्र वासं परित्यक्तुं शीलं यस्या सा तथा । गुरुभूतेत्यादि वक्ष्यमाणात् शिथिल चलो- कराविति जस्य न । अनुश्रभाणि अनुवाचि । अमरः । दोषोत्पादेऽनुबन्ध स्यात् प्रकृत्यादिषु नश्वरे । तस्याऽनुयायिनि शिष्यौ प्रकृतस्यानिवर्तने इति । अचिरं यद्य प्रसूतं यया सा अचिरप्रसूता तथोक्ता मल्लपरता अचिरप्रसूतोपरता तथा । मया विरहितं मया त्यक्तम् । निवर्तस्व प्रतिगच्छ ॥

(१४३) कण्व इति । सुगमम् ॥

(१४४) उत्पक्ष्मेति । उद्गत प्रपक्ष्म लोमावली ययो स्ते तयो नेत्रयो नैत्रयो- रुपरुद्धा व्याहता इत्ति विंषयग्रहो दर्शनमिति यावत् येन स तयोक्तं बाष्पं नेत्राम्बु कम्पं स्थिरतया स्थैर्य्येण शिथिलो मन्दीभूतो अनुबन्ध प्रवृत्ति र्यस्य स तथोक्तं कुरु खलु यस्मात् अलक्षितोऽदृष्टो नतोन्नतभूमिभागो निम्नोन्नतभूमिभागो यत्र स तस्मिन् अस्मिन् मार्गे ते तव पदानि चरणविन्यासा विषमीभवन्ति न समीभवन्ति स्खलन्तीति यावत् ॥

(१४५) शिष्याविति । ओदकान्तम् आ उदकान्तं उदकसमीपपर्य्यन्त मिति यावत् । अन्तं स्वरूपे नाशे ना न क्लो मेचेऽन्तिके त्रिष्विति मेदिनी । स्निग्धः स्नेहास्पदजन । श्रूयत इति । तथा च श्रुति । ओदकान्तं प्रियं प्रोथमनुव्रजेदिति । नो अस्माकं सम्भ्रमे । सन्दिश्य सन्देशं कृत्वा ॥

कण्व ॥ तेन सौम्यां क्षीरिच्छायामाश्रयाम । (१४६)

सर्व्वे तथा नाटयन्ति । (१४७)

कण्व ॥ किन्नु खलु तत्रभवतो दुष्मन्तस्य युक्तरूपं सन्देष्टव्यम् । इति चिन्तयति । (१४८)

अन ॥ सहि असमपदे ण अत्थि कोवि चित्तवन्तो जो तए विरहिज्जन्तो ण ताम्मदि पेक्ख दाव । (१४९)

१७, पुडइणिपत्तन्तरिदं बाहरिओवि ण क्ख वाहरेइ पिअं ।
दुस्सहदूहसिणाले तह दिट्ठिं देइ चक्काओ ॥ (१५०)

---

(१४६) कण्वइति । क्षीरिच्छायां क्षीरिणो वटस्य आश्रयाम । यद्यपि न्यग्रोधो दुम्बराश्वत्थपारिशक्षपादपा । पञ्चैते क्षीरिणो वृक्षा तेषा त्वक पञ्चवल्कलमिति राजनिर्घण्टुस्तथापीह बनच्छायतया छायासमर्थोचितत्वात न्यग्रोधमेव प्रतिपादयति क्षीरिशब्द । तथाचोक्तम् । अर्थात्प्रकरणाल्लिङ्गादौचित्याद्देशकालत । शब्दार्थास्तु विभिद्यन्ते न रूपादेव केवलादिति ॥

(१४७) सर्व्वेइति । तथा क्षीरिच्छायोपगमनम् ॥

(१४८) कण्वइति । युक्तरूपमनुरूपम । किन्नुखल्वर्थो संन्तिय प्रश्नोद्योत्यते । किन्तु प्रश्नवितर्कयोरिति मेदिनी ॥

(१४९) अनेति । सखीत्यादि । सखि आश्रमपदे नास्ति कोपि चित्तवान् यस्त्वया विरह्यमाणो न ताम्यति प्रेक्षस्व तावत् । चित्तवान् चेतन । विरह्यमाणस्त्यज्यमान । रहत्यागे इति कविकल्पद्रुम । ताम्यति खिद्यति । प्रेक्षस्व दृष्टिविन्यासमिति शेष ॥

(१५०) तदर्थयति पुडैत्यादि । पुटकिनीपत्रान्तरिता व्याहृतोपि न हि व्याहरति प्रियां । दुस्सहदुःखसहिताय त्वयि दृष्टिं ददाति चक्रवाकः । पुटकिन्या पद्मिन्या पत्रेणान्तरितां व्यवहिताम् । नालिकिनी पुटकिनी विसनालिव पद्मिनीत्युत्पलिनी । व्याहृतोपि आहूतोपि प्रियवेतियोज । चक्रवाक प्रिया न व्याहरति प्रतिवक्ति । अपितु दुस्सहदु दुःख सहमानः देन स तथोक्त सन् त्वयि दृष्टिं ददाति त्वामीक्षते । इयं गाथा । लक्षणन्तु प्रागुक्तम् ॥

कण्व ॥ वत्स शार्ङ्गरव इति त्वया मद्वचनात् स राजा शकुन्तलां पुरस्कृत्याभिधातव्यः । (१५१)

शार्ङ्ग ॥ आज्ञापयतु भवान् । (१५२)

कण्व ॥

अस्मान् साधु विचिन्त्य संयमधनानुच्चैः कुलञ्चात्मन-
स्त्वय्यस्याः कथमप्यबान्धवकृतां स्नेहप्रवृत्तिञ्च ताम् ।
सामान्यप्रतिपत्तिपूर्व्वकमियं दारेषु दृश्या त्वया
भाग्याधीनमतःपरं न खलु तत् स्त्रीबन्धुभिर्याच्यते ॥ (१५३)

शार्ङ्ग ॥ गृहीतोऽयं सन्देशः । (१५४)

---

(१५१) कण्व इति । पुरस्कृत्य अग्रेकृत्वा व्यस्तन्यस्तकारीति समासत्वेन ल्यपो यप् । मद्वचनात् मद्वाक्यादित्यर्थः । अभिधातव्यो वक्तव्यः ॥

(१५२) शार्ङ्गेति । सुगमम् ॥

(१५३) अस्मानिति । अस्मान् संयमधनान् संयमस्तप एव धनं येषां ते तथोक्तान् । तपःप्रभाविन इति यावत् । साधु विचिन्त्य सम्यगवधार्य्य एतेनास्मत्कोपसम्भावनं प्रकटितं । तथा आत्मन स्वस्य कुलं वंशञ्च उच्चैर्महत् अज्ञातदोषलेशमितियावत् । महत्युच्चैरित्यमरः । विचिन्त्य । अन्यथा पक्षपातितादोषप्रसक्तिरिति भावः । तथा त्वयि अस्याः शकुन्तलायाः तां प्राक्प्रकाशादद्भुतां स्नेहप्रवृत्तिं प्रणयमात्रं कथमपि केनापि प्रकारेण अबान्धवकृतां बान्धवजनैरजनिताञ्च विचिन्त्य । अन्यथा [illegible]ता स्यादित्याशयः । इयं शकुन्तला दारेषु पत्नीषु मध्ये सामान्यप्रतिपत्तिपूर्व्वकं स[illegible]ौरवपूर्व्वकम् । प्रतिपत्तिः प्रवृत्तौ च प्रागल्भ्ये गौरवेऽपि च । सम्प्राप्तौ च प्रबोधे च पदप्राप्तौ च योषितीति मेदिनी । त्वया दृश्या द्रष्टव्या । ऋदुपधात् क्यप् । अत परमितोऽधिकं भाग्याधीनं दैवायत्तं तत् खलु स्त्रीणां बन्धुभिः पित्रादिभि र्न याच्यते प्रार्थ्यते । इतोऽधिकार्थं नाभ्यर्थये इति भावः ॥

(१५४) शार्ङ्गेति । गृहीतो विदितः । सन्देशः संवादः ॥

कण्वः ॥ शकुन्तलां विलोक्य ॥ वत्से त्वमिदानीमनुशासनीयासि वनौकसोऽपि वयं लौकज्ञा एव । (१५५)

शार्ङ्ग ॥ भगवन् न खलु कश्चिदविषयो नाम धीमताम् (१५६)

कण्वः ॥ सा त्वमितः पतिकुलं प्राप्य । (१५७)

शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने
भर्तुर्विप्रकृतापि रोषणतया मास्म प्रतीपं गमः ।
भूयिष्ठं भव दक्षिणा परिजने भोगेष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ॥ (१५८)

---

(१५५) कण्व इति । अनुशासनीया उपदेश्या । अरण्यवासाधारस्य महर्षेः कथं वधूपदेशपरिज्ञानमित्यत आह वनौकस इति । वनमेव ओकः सद्म येषां ते वनौकसः । लौकिकाचारज्ञानशून्योऽपीत्यर्थः । लौकज्ञा लौकिकाचारं जानीम एव । [illegible]-दिति भावः ॥

(१५६) शार्ङ्गेति । न खलु नैव । अविषयो अज्ञातः । विषयो यस्य यो ज्ञात इत्य-र्थः । धीमतां बुद्धिशालिनाम् । तथाच धीमन्तो नाम बुद्धिबलेनैव सर्वमनुभवन्तीति भावः ॥

(१५७) कण्व इति । सा शासनीया त्वम् । इतः आश्रमात् । प्राप्येति लौकीय-क्रियाभिरन्वितम् ॥

(१५८) शुश्रूषस्वेति । गुरून् गुरुजनान् श्वशुरादीन् शुश्रूषस्व परिचर । श्रुणोतेः सन् । अज्झनगमां सनि दीर्घः । ज्ञाश्रुस्मृदृशां सन इत्यात्मनेपदम् । समानः एकः पतिर्यस्याः सा सपत्नी । [illegible] । समानैकपुत्रपतिवीरभ्रातृभ्यश्च ङीप् इति पत्युर्नकारादेशः । ज्योतिर्जनपदेति समानस्य सः । सपत्नी चासौ जनश्चेति सपत्नीजनो भर्तुर्दारान्तरं तस्मिन् प्रियसख्या वृत्तिमाचारं कुरु । विप्रकृतापि निकृतापि तिरस्कृतापीति यावत् । निकारो विप्रकार इत्यमरः । भर्तुरिति शेषः । रोषणतया क्रुद्धतया भर्तुः प्रतीपं पराङ्मुखं वाममाचारं वा । प्रतिलोम्य परा-वृत्ते । [illegible] इति [illegible] । मास्मगमः न याहि । [illegible]

गौतमी वा किं मन्यते। (१५९)

गौत॰। एत्तिओ क्खु वहूजणे उवदेसो। जादे एदं क्खु हिअए करेहि मा विसुमरिस्ससि। (१६०)

कण्वः। वत्से एहि परिष्वजस्व मां सखीजनञ्च। (१६१)

शकु॰। तात इदो ज्जेव किं पिअसहीओ णिवत्तिस्सन्ति। (१६२)

कण्व॰। वत्से इमे अपि प्रदेये तन्न युक्तमनयोस्तत्र गन्तुं त्वया सह गौतमी गमिष्यति। (१६३)

---

नाथस्तु भर्त्ता इत्यमरः। भर्त्तेति नाथस्यापि ग्रहणात् समागमः। तथा भोगेषु सुखेषु। भोगः सुखे स्त्र्यादिभृतावित्यमरः। अनुत्सेकिनी अनुद्धताशिनी सती परिजने परिचारकजने भूयिष्ठं प्रचुरं दक्षिणा सरला भव। दक्षिणे सरलोदारावित्यमरः। एवमनेन प्रकारेण युवतयः प्रमदाः। प्रमदा चेति विज्ञेया युवतिश्च तथा स्मृतेति भागुरिः। गृहिण्या गेहकार्य्यकुशलाया पदं अवस्थां यान्ति। गृहिणी स्त्रिया। भार्य्यायाञ्च गेहकार्य्यक्षमजायामिति शब्दाब्धिः। वामा एतद्विपरीताचारिण्यः कुलस्य आधयो व्यसनभूता भवन्तीति शेषः। आधिः मानसपीडायां प्रत्याशायाञ्च मन्यते। व्यसने चाप्यधिष्ठाने इति विश्वः। अत्र गृहिणीपदं यान्तीति साधर्म्येण वामा इत्यादि वैधर्म्येणार्थान्तरन्यासोऽलङ्कारः। तदुक्तं प्रकाशे। सामान्यं वा विशेषो वा तदन्येन समर्थ्यते यत्र सोऽर्थान्तरन्यासः साधर्म्येणेतरेण वेति। वृत्तं शार्दूलविक्रीडितम्॥

(१५९) गौतमीति। किं मन्यते गौतम्या किं मतमित्यर्थः।

(१६०) गौतेति। एत्तिअमित्यादि। एतावान् खलु वधूजने उपदेशः। जाते एतत् खलु हृदये कुरु मा विस्मरिष्यसि। वधूजने नवोढस्त्रीजने। विधू- स्नुषा नवोढस्त्रीभार्य्याप्रकाङ्गनासु चेति विश्वः। एतमुपदेशम्। हृदये कुरु धारय॥

(१६१) कण्व इति। परिष्वजस्व आलिङ्ग। सनूज इत्युपेति न स्तोम।

(१६२) शकु इति। तादेत्यादि। तात इत एव किं प्रियसख्यौ निवर्त्तिष्येते। निवर्त्तिष्येते प्रतिगमिष्यतः॥

(१६३) कण्व इति। प्रदेये प्रदानार्हे अनूढे इति यावत्॥

शकु ॥ पितरमाश्लिष्य ॥ कधं दाणिं तादस्स अङ्कादो परिब्भट्टा मलअपव्वदादो उम्मूलिदा चन्दनलदा विअ देसन्तरे जीविदं धारइस्सं । (१६४)

काश्य ॥ वत्से किमेवं कातरासि । (१६५)

अभिजनवतो भर्तुः श्लाघ्ये स्थिता गृहिणीपदे
विभवगुरुभिः कृत्यैरस्य प्रतिक्षणमाकुला ।
तनयमचिरात् प्राचीवार्कं प्रसूय च पावनं
मम विरहजां न त्वं वत्से शुचं गणयिष्यसि ॥ (१६६)

---

(१६४) शकु इति । अङ्कम् उत्सङ्गम् । उत्सङ्गचिह्नयोरङ्क इत्यमरः । आश्लिष्य आलिङ्ग्य । कथमित्यादि । कथमिदानीं तातस्याङ्कात्परिभ्रष्टा मलयपर्वतादुन्मूलिता चन्दनलतेव देशान्तरे जीवितं धारयिष्यामि । अङ्कात् क्रोडात् । परिभ्रष्टा च्युता । उन्मूलिता उत्पाटिता । धारयिष्यामि अहमितिशेषः । चन्दनलतापि मलयादन्यत्र नीता न जीवतीति प्रसिद्धिः ॥

(१६५) कथम इति । किं कथम् । कातरा अधीरा ॥

(१६६) अभीति । अभिजनवतः कुलप्रशस्तिमतः ख्यातिमतो वा । अभिजनः कुले ख्यातावितिविश्वः । भर्तुर्दुष्मन्तस्य श्लाघ्ये गौरविते । गौरवितास्तार्थ्यैमिष्टा श्लाघ्यास्त्वभवन्नुता इति त्रिकाण्डशेषः । गृहिणीपदे गृहिणीव्यवसाये स्थिता वर्तमाना तथा अस्य भर्तुर्विभवेन सम्पत्त्या गुरुभिः महद्भिः । गुरुर्महति चान्यवदिति विश्वः । कृत्यैः कार्यैः प्रतिक्षणं क्षणे क्षणे आकुला व्यग्रा च सती । व्यस्ते त्वप्रगुणाकुलावित्यमरः । प्राची पूर्वा दिक् । प्राच्यवाची प्रतीच्यस्ताः पूर्वदक्षिणपश्चिमाः इत्यमरः । पावनं पवित्रताकारणमर्कं दिवाकरमिव । तथा च पवित्रताकारणाय तस्मै शुद्धात्मने नम इति सूर्याधिकारे विष्णुपुराणम् । अचिरात्पावनं पवित्रम् । अस्मिंस्तु पक्षे अर्को न विवक्षितः । तनयं पुत्रं प्रसूय उत्पाद्य रे वत्से त्वं मम विरहजां मत्परित्यागभवां शुचं शोकम् । मन्युशोकौ तु शुक् स्त्रियामित्यमरः । न गणयिष्यसि नानुभविष्यसि । अत्रोपमालङ्कारः । इदं हरिणी नाम वृत्तम् । लक्षणमुक्तम् ॥

शकु ॥ पितुः पादयोः पतित्वा ॥ ताद वन्दामि। (१६७)

कण्व ॥ वत्से यदहमिच्छामि तदस्तु ते। (१६८)

शकु ॥ सख्यावुपगम्य ॥ सहीओ एध दुवेवि मं समं ज्जेव परिस्सजध। (१६९)

सख्यौ ॥ तथा कृत्वा ॥ सहि जइ णाम सो राएसी पच्चहिण्णाणमन्थरो भवे तदो से इमं अत्तणो णामहेअङ्किदं अङ्गुलिअअं दंसइस्ससि। (१७०)

शकु ॥ इमिणा वो सन्देसेण कम्पिदं मे हिअअं। (१७१)

सख्यौ ॥ सहि मा भाआहि सिणेहो पावमासङ्कदि। (१७२)

शार्ङ्ग ॥ भगवन् दूरमधिरूढः सविता तत्त्वरयात्रभवतीम्। (१७३)

---

(१६७) शकु इति। सुगमम्॥

(१६८) कण्व इति। यदिच्छामि अभीष्टमित्यर्थः॥

(१६९) शकु इति। सख्यावुपगम्य सख्योरन्तिकं गत्वा। एधेत्यादि। एतं द्वे अपि मां सममेव परिष्वजेथाम्। एत आगच्छतम्। समं सह। परिष्वजेथामालिङ्गतम्॥

(१७०) सख्याविति। तथाकृत्वा युगपत्परिष्वज्य। सहीत्यादि। सखि यदि नाम स राजर्षिः प्रत्यभिज्ञानमन्थरो भवेत् तदास्मै इदमात्मनो नामधेयाङ्कितमङ्गुरीयकं दर्शयिष्यसि। यदि नाम यदि चेत्। नाम कोपेऽभ्युपगमे विस्मये स्मरणेऽपि च। सम्भाव्यकुत्साप्राकाश्यविकल्पेष्वपि च दृश्यते इति मेदिनी। प्रत्यभिज्ञाने सेयमिति ज्ञाने मन्थरो विलम्बी भवेत्। नामधेयाङ्कितं नामाक्षराङ्कितम्॥

(१७१) शकु इति। इमिणेत्यादि। अनेन वां सन्देशेन कम्पितं मे हृदयम्। वां युवयोः। सन्देशेन उपदेशेन॥

(१७२) सख्याविति। सहीत्यादि। सखि मा बिभीहि स्नेहः पापमाशङ्कते। पापमाशङ्कते अनिष्टसंशयमारोपयति॥

(१७३) शार्ङ्गेति। सविता सूर्यः दूरमुदयस्थानादन्तरं व्योम अधिरूढः आक्रान्तवान्। तस्य त्वरायै प्रेरय। घटादित्वात् ह्रस्वः॥

शकु ॥ भूयः पितुरङ्कमाश्रित्य आश्रमाभिमुखीभूय च ॥ ताद कदा णु क्खु भूओ तवोवणं पेक्खिस्सं । (१७४)

कण्वः ॥ श्रूयतां । (१७५)

भूत्वा चिराय सदिगन्तमहीसपत्नी
दौष्मन्तिमप्रतिरथं तनयं प्रसूय ।
तत्सन्निवेशितधुरेण सहैव भर्त्रा
शान्त्यै करिष्यसि पदं पुनराश्रमेऽस्मिन् ॥ (१७६)

गौत ॥ जादे परिहीयदि दे गमणवेला ता णिवत्तावेहि पिदरं अधवा चिरेणावि एसा ण णिवत्तइस्सदि ता णिवत्तदु भवं । (१७७)

---

(१७४) शकु इति । भूयः पुनः । तादेत्यादि । तात कदा नु खलु भूयस्तपोवनं प्रेक्षिष्ये । वस्तुजिज्ञासायाम् ॥

(१७५) कण्व इति । सुगमम् ॥

(१७६) भूत्वेति । चिराय बहून् कालान् व्याप्य दिगावन्ता दिगन्ता तैः सह वर्त्तमाना सदिगन्ता निरवशेषेति यावत् । सा चासौ मही चेति सदिगन्तमही तस्याः सपत्नी एकभर्त्तृका भूत्वा तथा दुष्मन्तस्यापत्यं दौष्मन्तिम् । अदन्तत्वादपत्ये इञः । अप्रतिरथमसपत्नमेकाधिपमिति यावत् तनयं पुत्रं प्रसूय तस्मिं स्तनये सन्निवेशिता समर्पिता धूः साम्राज्यभारो येन स तेन । धूस्तु स्यात् कार्यचिन्तयो रित्येकाक्षरकोषः । धुरोऽनक्षस्य इत्यप्रत्ययः । भर्त्रा दुष्मन्तेन सहैव शान्त्यै मोक्षाय पुनरस्मिन्नाश्रमे पदं स्थानं करिष्यसि । वानप्रस्थाश्रमीयम् । यथाह विष्णुपुराणम् । वयःपरिणतौ राजन् कृतकृत्यो गृहाश्रमी । पुत्रेषु भार्य्यां निक्षिप्य वनं गच्छेत् सहैव वेति । कूर्म्मपुराणञ्च । ये तु सम्यगिममाश्रमं शिवमाश्रयत्यशिवपुञ्जनाशनम् । ते विशन्ति पदमैश्वरं परं यान्ति चैव जगतोऽस्य संस्थितिमिति । वसन्ततिलकं नाम वृत्तमिदम् ॥

(१७७) गौतेति । जादे इत्यादि । जाते परिहीयते ते गमनवेला तन्निवर्त्तय पितरम् । अथवा चिरेणाप्येषा न निवर्त्तयिष्यति तन्निवर्त्ततां भवान् । परिहीयते स्वयमेव परित्यज्यते । क्रियायाः कर्म्मस्थत्वात् कर्म्मकर्त्तर्य्यात्मनेपदविभक्तिः । तातप्रियाया स्वद-

कण्व॰ ॥ वत्से उपरुध्यते मे तपोऽनुष्ठानम्। (१७८)

शकु ॥ तवच्चरणवावारेण निरुक्कण्ठो तादो अहं उण उक्कण्ठाभाइणी संवुत्ता। (१७९)

कण्व ॥ वत्से मामेवं जडीकरोषि। (१८०)

नि श्वस। (१८१)

अपयास्यति मे शोकः कथं नु वत्से त्वया रचितपूर्व्वम्।
उटजद्वारविरूढं नीवारबलिं विलोकयतः ॥ (१८२)

---

यच्चतया महर्षिमेव स्वयं निवर्त्तने प्रवर्त्तयति अथवेति। चिरेणापि विलम्बेनापि॥ शकु। भूय. पितुरङ्कमाश्लिष्य। तवच्चरणपीडिदं तादशरीरं। ता मा अदिमेत्तं मम किदे उक्कण्ठिदुमिति क्वचित् पाठ.। तत्र तपश्चरणपीडितं तातशरीरं। तदत्र अतिमात्रं मम कृते उत्कण्ठोऽस्य ।

(१७८) कण्व इति। मम तपसोविधकर्म्मणोऽनुष्ठानमुपरुध्यते व्याहन्यते॥

(१७९) शकु इति। तवेत्यादि। तपश्चरणव्यापारेण निरुत्कण्ठस्तात अहं पुन उत्कण्ठाभागिनी संवृत्ता। तप इति। तपोऽनुष्ठानव्यापारेणेत्यर्थः। निरुत्कण्ठो निश्चिन्त। अहं पुनरहन्तु। उत्कण्ठा तातादर्शनजनितमनोवेदना। रागे त्वलब्ध-विषये महती वेदना तु या। शमोमयी तु गात्राणां तामुत्कण्ठां विदुर्बुधा इत्यमर॥

(१८०) कण्व इति। एवमनेन प्रकारेण मा जडीकरोषि जड़िमानं जनयसि। जड़िमानमाह। इष्टानिष्टापरिज्ञानं यत्र प्रश्नेष्वनुत्तरम्। दर्शनश्रवणाभावो जड़िमा सोऽभिधीयत इति॥

(१८१) निश्वसेति। दीर्घमिति शेष.॥

(१८२) अपेति। नु भो वत्से त्वया रचितपूर्व्वं विहङ्गमानां भोजनार्थं स्थापितपूर्व्वं अधुना उटजद्वारे पर्णशालायां अग्रतो विरूढमङ्कुरितम्। विरूढोऽङ्कुरिते जाते इति मेदिनी। नीवारबलिं नीवारधान्योपहारं विलोकयत पश्यतो मे कथं शोकोऽपयास्यति निवर्त्तिष्यते। कदापि न तस्यैव स्मारकत्वादिति भाव। इय मार्य्या॥

गच्छ शिवास्ते सन्तु पन्थानः । (१८३)

इति निष्क्रान्ता शकुन्तलया सह गौतमीशार्ङ्गरवमिश्राः । (१८४)

सख्यौ ॥ चिरं विचिन्त्य सकरुणम् ॥ हद्धी हद्धी अन्तरिदा सउन्तला वणराईहिं । (१८५)

कण्वः ॥ सनिश्वासम् ॥ अनसूये प्रियंवदे गता वां सहचरी निगृह्य शोकावेगं मामनुगच्छतम् । (१८६)

सर्वे प्रस्थिताः । (१८७)

उभे ॥ ताद सउन्तलाविरहिदं सुण्णं विअ तवोवणं पविसम्ह । (१८८)

कण्वः ॥ स्नेहप्रवृत्तिरेवंदर्शिनी । (१८९)

---

(१८३) गच्छेति । शिवा मङ्गलदायिनः ॥

(१८४) इतीति । इति एवं उक्ते ॥

(१८५) सख्याविति । सकरुणं करुणरसं वितत्य । हद्धीत्यादि । हाधिक् हाधिक् अन्तरिता शकुन्तला वनराजिभिः । शकुन्तला वनराजिभिः वनश्रेणीभिरन्तरिता अन्तर्हापिता ॥

(१८६) कण्व इति । सनिश्वासं सदीर्घश्वासम् । वां युवयोः । सहचरी सखी । निगृह्य दमयित्वा । शोकावेगं शोकवेगम् ॥

(१८७) सर्वे इति । सर्वे कण्वोऽनसूया प्रियंवदा च । पुंसोः प्राधान्यात् पुंस्त्वम् । प्रधानेन हि व्यपदेशा भवन्तीति न्यायात् ॥

(१८८) उभे इति । तादेत्यादि । तात शकुन्तलाविरहितं शून्यमिव तपोवनं प्रविशामः । शकुन्तलाविरहितं शकुन्तलया हीनम् । शून्यमिव शून्यवत् प्रतीयमानम् ॥

(१८९) कण्व इति । स्नेहप्रवृत्तिः स्नेहप्रवाहः । प्रवृत्तिस्तु प्रवाहे स्यात् वृत्तान्ते च प्रवर्तने इति मेदिनी । एवं दर्शयतीत्येवंदर्शिनी ॥

सविमर्शं परिक्रम्य ॥ हन्त भोः शकुन्तलां पतिगृहे विसृज्य लब्ध-मिदानीं स्वास्थ्यम् । कुतः । (१८०)

अर्थो हि कन्या परकीय एव तामद्य संप्रेष्य परिग्रहीतुः ।
जातोऽस्मि सद्योविशदान्तरात्मा चिरस्य निक्षेपमिवार्पयित्वा ॥ (१८१)

इति निष्क्रान्ताः सर्वे । चतुर्थोऽङ्कः । (१८२)

---

(१८०) सविमर्शमिति । सवितर्कं विचार्येव सहेति यावत् । वितर्कः स्यादूहनं परामर्शो विमर्शनम् । अध्याहारस्तर्क ऊह इति हेमचन्द्रः । हन्तकारो हर्षद्योतकः । विसृज्य प्रेष्य ॥ स्वास्थ्यं प्रकृतिस्थता । हेतुमुद्भावयति कुत इति ॥

(१८१) अर्थ इति । कन्या अर्थः कन्यात्मकं धनं परकीयः परस्वामिक एव । अनन्यसम्प्रदानीयत्वेनोपदेशादन्यदीयत्वस्य भावित्वेऽपि भूतवदुपचारेण कन्यासामान्यस्य परकीयत्वोक्तिः । अद्य तां कन्यां परिग्रहीतुः स्वीकर्त्तुः सम्बन्धे सम्प्रेष्य विसृज्य । अदृष्टार्थकद्रव्यस्वीकारः प्रतिग्रहः । परिग्रहस्तु साधितस्वीकारश्च वस्तुनः स्वयं स्वीकारः । अतोऽत्र युक्तः परिग्रहेः प्रयोगः । ननु स्वामपि स्वीकारात् प्राक् महर्षेः स्वामित्वात् बाधितोऽस्तु राज्ञः स्वीकारः स्वत्वस्य स्वत्वान्तरविरोधित्वादिति चेन्न कन्यायामपि पुः परिग्रहसजातीयस्वत्वाभावात् सजातीयस्वत्वस्य च सजातीयस्वत्वान्तरम्प्रति प्रतिबन्धकत्वस्य नियमेन स्वीकृतत्वात् । अतएव अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीमिति वैवाहिकविधिरुपपद्यते । चिरस्य निक्षेपं चिरन्यासीकृतम् । चिराय चिररात्राय चिरस्याद्याश्चिरार्थका इत्यमरः । अर्थमर्पयित्वा प्रत्यर्प्य सद्यः सपदि विशदो निर्मलो अन्तरात्मा यस्य तथोक्तो जातोऽस्मि । अत्रोपमालङ्कारः । वृत्तमुपजातिरेव ॥

(१८२) इतीति । अङ्कः परिच्छेदः ॥

इति श्रीकृष्णनाथपञ्चाननकृतायामभिज्ञानशकुन्तलटीकायां

प्रबोधिकाख्यायां चतुर्थाङ्कविवरणम् ॥

---

# अभिज्ञानशकुन्तलम्।

## पञ्चमोऽङ्कः।

तत प्रविशति कञ्चुकी। (१)

कञ्चु॥ अहोवत कीदृशीं वयोवस्थामापन्नोऽस्मि। (२)

आचार इत्यधिकृतेन मया गृहीता
या वेत्रयष्टिरवरोधगृहेषु राज्ञः।
काले गते बहुतिथे मम सैव जाता
प्रस्थानविक्लवगतेरवलम्बनाय॥ (३)

---

(१) तत इति। कञ्चुकिलक्षणमाह भरतः। अन्तःपुरचरो वृद्धो विप्रो गुणगणान्वितः। सर्वकार्यार्थकुशलः कञ्चुकीत्यभिधीयते। जरावैक्लव्ययुक्तेन विशेषालेण कञ्चुकीति॥

(२) कञ्चु इति। अहोवतशब्दाभ्यां सविस्मयः खेदो द्योत्यते। वयोऽवस्थां वयस कालकृतविशेषम्। आपन्नः प्राप्तः। विशेष कालिकोऽवस्थेत्यमरः॥

(३) आचार इति। राज्ञोऽवरोधगृहेषु अन्तःपुरगृहेषु अधिकृतेनाध्यक्षेण। अध्यक्षाधिकृतौ समावित्यमरः। अन्तर्नियुक्तेनेति यावत्। अन्तःपुरेत्वधिकृतः स्यादन्तर्वंशिको जन इत्यमरः। मया आचारोऽस्माकमयमाचार इति विविच्य या वेत्रयष्टिर्वेत्रदण्डो गृहीता धृता। अथ यष्टिश्च यष्टिर्यष्टी च यष्टिका। दण्डः काण्डोऽपि लगुडः यष्टिर्दण्डकोऽपि चेति शब्दरत्नावली। बहुतिथे बहूनां पूरणे। बहुगणपूगसङ्घात्तिथुगिति तिथुक्। काले गते सति सैव आचारगृहीतैव वेत्रयष्टिः प्रस्थाने यात्रायां

यावदभ्यन्तरगताय देवाय स्वमनुष्ठेयमकालक्षेपार्हं निवेदयामि । (४)

(स्तोकान्तरं गत्वा) किं पुनस्तत् । (५)

(विचिन्त्य) आं ज्ञातं कण्वशिष्यास्तपस्विनो देवं द्रष्टुमिच्छन्ति भो चित्रमेतत् । (६)

२ क्षणात् प्रबोधमायाति लङ्घ्यते तमसा पुनः ।
निर्वास्यतः प्रदीपस्य शिखेव जरतो मतिः ॥ (७)

---

निश्चला स्थिरा गतिर्यस्य च तस्य मम अवलम्बनाय आश्रयाय जाता । देहदौर्बल्यादिति भावः ॥

(४) यावदिति । अभ्यन्तरगताय अन्तःपुरस्थाय । देवाय राज्ञे । राजा भट्टारको देव इति नाट्योक्तावमरः । स्वमात्मीयम् । अनुष्ठेयं कर्तव्यम् । अकालक्षेपार्हं विलम्बानर्हम् ॥

(५) स्तोकमिति । स्तोकमल्पम् अन्तरमवधिम् । किं पुनस्तत् तत् अनुष्ठेयं पुनः किम् । एतेन विस्मृतिरूपणम् ॥

(६) विचिन्त्येति । स्मृत्वेत्यर्थः । आमिति स्मृतिं द्योतयति । आं ज्ञाने निश्चयोक्त्योरिति मेदिनी । ज्ञातं स्मृतम् किमित्याह कण्वेत्यादि । भो इत्यनधिकारामन्त्रणम् ॥ एतत् ममाविस्मरणं आश्चर्यम् ॥

(७) क्षणादिति । जरतो वर्षीयसो मतिर्बुद्धिः । वर्षीयान् दशमी ज्यायान् जीनो जीर्णो जरन्नपीत्यमरः । निर्वास्यतो निर्वाणं गमिष्यतः प्रदीपस्य शिखेव क्षणात् प्रबोधं परिस्फुरणमायाति प्राप्नोति पुनस्तमसा मोहादिभिस्तमोगुणविशेषेण पक्षे अन्धकारेण लङ्घ्यते आक्रियते । पूर्णोपमालङ्कारः । तदुक्तं चन्द्रालोके । उपमा यत्र सादृश्यलक्ष्मीरुल्लसति द्वयोरिति ॥

परिक्रम्यावलोक्य च ॥ एष देवः । (८)

प्रजाः प्रजाः स्वा इव तन्त्रयित्वा
(१) निषेवते श्रान्तमना विविक्तम् ।
यूथानि सञ्चार्य्य रविप्रतप्तः
शीतं गुहास्थानमिव द्विपेन्द्रः ॥ (९)

भोः सत्यं धर्म्मकार्य्यमनतिपात्यं देवस्य तथापि शङ्कितवानस्मि इदानीमेव धर्म्मासनादुत्थिताय देवाय काण्वशिष्यागमनं निवेदयितुम् । अथवा कुतो विश्रामो लोकपालानाम् । तथाहि । (१०)

---

(८) परीति । एष समीपस्थ इत्यर्थः ॥

(९) प्रजा इति । स्वा स्वीयाः प्रजाः सन्ततीरिव प्रजा विषयवासिनो जनान् । प्रजा स्यात् सन्ततौ जन इत्यमरः । तन्त्रयित्वा धारयित्वा । तत्रि कुट धारणे इति कविकल्पद्रुमः । धारणं न्याय्यपथस्थापनम् । संस्था तु मर्य्यादा धारणा स्थितिरित्यमरः । श्रान्तः श्रान्तिमत् मनो यस्य स तथोक्तः एष देवो यूथानि हस्तिनां कुलानि । सजातीयं कुलं यूथमित्यमरः । सञ्चार्य्य चारयित्वा रविप्रतप्तो भास्करकरसन्तप्तो द्विपेन्द्रो हस्तिपतिः यूथनाथ इति यावत् । दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विप इत्यमरः । शीतं शीतलं गुहास्थानं पर्व्वतविलप्रदेशमिव विविक्तं विजनं निषेवते अधिवसति । अत्रोपमालङ्कारः । वृत्तमुपजातिः ॥

(१०) भोरिति । देवस्य राज्ञो धर्म्मकार्य्यं धर्म्मार्थं कर्म्म । अनतिपात्यमनतिक्रमणीयमिति सत्यम् । सत्यमित्यङ्गीकारार्थमव्ययम् । सत्यं शपथे तथ्ये ऽभ्युपगमे इति मेदिनी । तथापि इदानीमधुनैव धर्म्मासनात् धर्म्माधिकरणासनादुत्थिताय देवाय काण्वशिष्यागमनं निवेदयितुं निवेदयितुं शङ्कितवान् भीतवानस्मि । यद्वा निवेदयितुं शङ्कितवानस्मि । यतः शश्रान्तोऽयमिति । लोकपालानां प्रजापालानाम् ।

भानुः सकृद्युक्ततुरङ्ग एव
रात्रिन्दिवं गन्धवहः प्रयाति ।
शेषः सदैवाहितभूमिभारः
षष्ठांशवृत्तेरपि धर्म्म एषः ॥ (११)

इति परिक्रामति । (१२)

ततः प्रविशति राजा विदूषको विभवतश्च परीवारः । (१३)

राजा । अधिकारखेदं निरूप्य ॥ सर्व्वः प्रार्थितमधिगम्य सुखी सम्पद्यते जन्तुः राज्ञान्तु चरितार्थता दुःखोत्तरैव । कुतः (१४)

---

(११) भानुरिति । भानुः सविता सकृदेकवारं युक्ता योजितास्तुरङ्गा अश्वा येन स तथोक्तः । सततमेव गच्छति न विश्राम्यतीत्यर्थः । तथा गन्धवहो वायुः रात्रिञ्च दिवा च द्वयोः समाहारो रात्रिन्दिवम् । निपातनात् सिद्धम् । अहोरात्रमित्यर्थः । प्रयाति गच्छति । तथा शेषोऽनन्तः सदैव आहितो अर्पितो भूमेः भारो यस्य स तथोक्तः । सततमेव भूभारं वहतीति भावः । तद्वत् षष्ठांश प्रजोपार्जितद्रव्यजातानां षष्ठो भागो वृत्तिः राजोचितो यस्य च तस्य राज्ञोऽपि एष अविश्रामरूपो धर्म्मः । अत्रैकधर्माविश्रामरूपः सामान्यो धर्म्मो विभिन्न-शब्दैः पृथक् पृथक् निर्द्देशात् प्रतिवस्तूपमालङ्कारः । सा चात्र मालारूपा । तदुक्तमाकरे । प्रतिवस्तूपमा तु सा । सामान्यस्य द्विरेकस्य यत्र वाक्यद्वये स्थिति-रिति । इन्द्रवज्राख्यानाम वृत्तम् । तदुक्तम् । यस्यास्त्रिषट्सप्तममक्षरं स्यात् गुरुसं सुजङ्घे नवमञ्च तद्वत् । गत्या विलोलङ्खलु यत्र कान्ते तामिन्द्रवज्रां भवते कवीन्द्रा इति ॥

(१२) इतीति । सुगमम् ॥

(१३) तत इति । विभवतः ऐश्वर्य्यानुसारात् ॥

(१४) राजेति । अधिकारखेदम् अधिकारात् व्यापारात् खेदं दैन्यम् एवो-न्तु निरूप्य । अधिगम्य लब्ध्वा । सम्पद्यते भवति । जन्तु शरीरी ।

औत्सुक्यमात्रमवसादयति प्रतिष्ठा
क्लिश्नाति लब्धपरिपालनवृत्तिरेव ।
नातः श्रमापनयनाय यथा श्रमाय
राज्यं स्वहस्तधृतदण्डमिवातपत्रम् ॥ (१५)

नेपथ्ये ॥ वैतालिकौ ॥ जयति जयति देवः । (१६)

एकः ॥

स्वसुखनिरभिलाषः खिद्यसे लोकहेतोः
प्रतिदिनमथवा ते वृत्तिरेवंविधैव ।
अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णं
शमयति परितापं छायया संश्रितानाम् ॥ (१७)

---

अन्तुजन्यपरीरिव इत्यमरः । चरितार्थता प्रयोजनसिद्धिः राज्यलाभ इति यावत् । हे.लोकतया दुःखं परिपालनकष्टसहनम् परस्तादेव यस्याः सा तथोक्तैव न सुखहेतुरित्यर्थः ॥

(१५) औत्सुक्येति । प्रतिष्ठा ख्यातिरौत्सुक्यमात्रं चिन्तारेऽस्मिन् लोके किं करोमीत्युत्कण्ठामात्रमवसादयति शमयति । लब्धस्य राज्यस्य परिपालनवृत्तिः पालनाचारः क्लिश्नात्येव पीडयत्येव । अत स्वहस्तेन धृतो दण्डो यस्य तत् तथाभूतमातपत्रं छत्रमिव राज्यं यथा श्रमाय भवति तथा श्रमापनयनाय श्रान्तिप्रशमनाय न । नातिश्रमापनयनायेति पाठे । अत इत्यध्याहार्यं श्रमस्यातिप्रशमनायेति व्याख्यातव्यम् । उपमालङ्कारः । वसन्ततिलकं वृत्तम् ॥

( १६ ) नेपथ्य इति । वैतालिकौ बोधकरौ । वैतालिका बोधकरा इत्यमरः । जयति उत्कर्षेण वर्त्तताम् । जेस्तुरन्त्योऽस्त्वन्तोऽतिरिति व्याख्यानुपक्षिप् ॥

(१७) एक इति । वैतालिकयो रन्यतर इत्यर्थः । स्वसुखेति । त्वं स्वसुखेन एव निरभिलाषो निःस्पृहः सन् लोकहेतोः प्रजासुखहेतोः प्रतिदिनं दिने दिने खिद्यसे खेदं प्राप्नोषि अथवा तव एवंविधा एवम्प्रकारैव वृत्तिः स्वभावः ।

द्वितीयः।

नियमयसि विमार्गप्रस्थितानात्तदण्डः
प्रशमयसि विवादं कल्पसे रक्षणाय।
अतनुषु विभवेषु ज्ञातयः संविभक्ता-
स्त्वयि तु परिसमाप्तं बन्धुकृत्यं जनानाम्॥ (१८)

---

विधा विधौ प्रकारे चेत्यमरः। क्लृप्तिस्तु निर्म्मितौ। समाने चापि कथितेति मेदिनी। अत्र दृष्टान्तयति अनुभवतीति। तथाहि पादपो विटपी मूर्द्ध्ना विषहते तीव्रं तु वहत्युष्णमातपम्। उपांशुत्वेऽपि नातपेऽदतीति लिङ्गाद्युपेय। शमयति प्रत्यक्षीकरोति व्यञ्जातीति यावत् छायया करणेन संश्रितानामात्मानमाश्रितानां परितापं सन्तापं शमयति नाशयति। अत्र दृष्टान्तोऽलङ्कार। उपमानधर्म्मस्य क्रियायाः प्रतिबिम्बनात्। तदुक्तं प्रकाशे दृष्टान्त पुनरेतेषां सर्व्वेषां प्रतिबिम्बनादिति। वृत्तं मालिनी नाम॥

(१८) द्वितीय इति। वैतालिकयोरिति शेष। नियमयसीति। आत्तदण्डो गृहीतदण्डविधिः सन् विमार्गे विपथे अविहितकर्म्मणीत्यर्थः। प्रस्थितान् गच्छतः प्रवृत्तानिति यावत्। नियमयसि विषयप्रवृत्ते स्तम्भयसि तथा विवादं व्यवहारं प्रशमयसि निष्पादयसि विवादो व्यवहार इत्यादित्यमर। तथा रक्षतीति रक्षणः। नन्द्यादित्वाल्ल्युः। रक्षणाय प्रजानां पालकाय कल्पसे सम्पद्यसे रक्षणो भवसीत्यर्थ। क्लृपि सम्पद्यमाने चेति चतुर्थी। विकारो न विवक्षितः। ज्ञातयश्च दायादा अतनुषु अनल्पेषु विभवेषु धनेषु। अर्थरै विभवा अपीत्यमर। संविभक्ता विभागं गताः। कर्त्तरि क्तः। तद्धो कथमत इत्यवशेरन्य सापि प्रयोगस्य अभिधानात्। किन्तु जनानां बन्धुकृत्यं बन्धूचितं कर्म त्वयि परिसमाप्तं निर्वृत्तम्। न ते ज्ञातिषु तेषामराजत्वादिति भाव। एतेन तेभ्योऽप्युत्कर्षस्थापनाद्राजानमुत्कर्षयति। मालिनी नाम वृत्तमिदम्॥

राजा । आकर्ण्य साश्चर्यम् ॥ एतेन कार्य्यानुशासनपरिश्रान्ताः पुन र्नवीकृताः स्मः । (१९)

विदू ॥ विहस्य ॥ भोः गोविन्दारच्चित्ति भणिदस्स विसभस्स किं परिस्समो पणस्सदि । (२०)

राजा ॥ सस्मितम् ॥ ननु क्रियतामासनपरिग्रहः । (२१)

उभौ । उपविश्य परिजनश्च यथास्थानं स्थितः ॥ (२२)

नेपथ्ये वीणाशब्दः ॥ (२३)

विदू ॥ कर्णं दत्त्वा ॥ भो वअस्स सङ्गीदसालब्भन्तरे कण्णं देहि तालमणुग्गाए वीणाए सलसंजोओ सुणिअदि जाणे तत्तभोदी हंसवदी वण्णपरिचअं करेदि त्ति । (२४)

राजा । आकर्ण्य सखेदम् ॥ एतेन कार्य्यानुशासनपरिश्रान्ताः पुन र्नवीकृताः स्मः । (१९)

विदू ॥ विहस्य ॥ भोः गोविन्दारअत्ति भणिदस्स विसभस्स किं परिस्समो णस्सदि । (२०)

राजा ॥ सस्मितम् ॥ ननु क्रियतामासनपरिग्रहः । (२१)

उभौ । उपविष्टौ परिजनश्च यथास्थानं स्थित. ॥ (२२)

नेपथ्ये वीणाशब्दः ॥ (२३)

विदू ॥ कर्णं दत्वा ॥ भो वअस्स सङ्गीदसालब्भन्तरे कण्णं देहि सरलअसुद्धाए वीणाए सरसंजोओ सुणिअदि जाणे तत्थभोदी हंसवदी वण्णपरिचअं करेदि त्ति । (२४)

---

(१९) राजेति । आकर्ण्य सविस्मयम् । एतेन वाक्येन । कार्य्यानुशासने कर्त्तव्योपदेशे परिश्रान्ता वय पुनर्नवीकृता सानुरागीकृताश्च ॥

राजा ॥ सस्मितम् ॥ सकृत्कृतप्रणयोऽयं जन इत्यक्षरार्थः । तदहं देवीं हंसवतीमन्तरेण उपालम्भनमागतोऽस्मि सखे माधव्य मद्वचनादुच्यतां देवी हंसवती सम्यगुपालब्धोऽस्मीति । (३१)

विदू ॥ जं तवं आणवेदि । (३२)

उत्थाय ॥ भो वअस्स गहीदो तुए परकीएहिं हत्थेहिं सिहण्डए अच्छभल्लो ता वीदरायस्स असरणस्स णत्थि मे मोक्खो । (३३)

राजा ॥ सखे ! गच्छ नागरिकवृत्त्या सान्त्वयैनाम् । (३४)

---

गृहीतो भवता अक्षरार्थः । अस्या गीतिकाया अक्षरार्थो वर्णार्थो भवता किं गृहीत किमवगत । अक्षरं मन्त्रवर्णयोरिति विश्वः । अपि प्रश्नम् द्योतयति ॥

(३१) राजेति । सकृदेकवारं कृत प्रणय प्रेम यस्मिन् स तथोक्तोऽयं जनो हंसवतीरूप । इत्यक्षरार्थ एव वर्णार्थः । हंसवतीमन्तरेण हंसवतीं विना । तत्सम्बन्धयोगाभावेनेति यावत् । पृथक् विनान्तरेणर्ते इत्यमरः । उपालम्भनं वाच्यताम् । मद्वचनादुच्यतां महाराज एवमाहेत्युच्यताम् । उपालम्भो दूषणम् ॥

(३२) विदू इति । जमित्यादि । यद्भवानाज्ञापयति । सुगमम् ॥

(३३) उत्थायेति । भो इत्यादि । भो वयस्य गृहीतस्त्वया परकीयाभ्यां हस्ताभ्यां शिखण्डके अच्छभल्लो वीतरागस्याशरणकस्य नास्ति मे मोक्षः । त्वया परकीयाभ्यामन्यदीयाभ्यां हस्ताभ्यां करणाभ्यामच्छभल्लो भालूकः । अच्छभल्लभालूका इत्यमरः । शिखण्डके शिखापक्षे गृहीतो धृतः । येन सर्वैर्नखैर्विदारयितुं शक्नोमीति भावः । शिखण्डे तु शिखापर्हे इति रभसः । एतेन त्वं क्रुद्धा देवीमन्येन सान्त्वयितुं यतसे इति गम्यते । ततः तस्मात् । वीतरागस्य विगतक्रोधादिकस्य क्रोधाद्यनुभवशून्यस्येति यावत् । राग क्रोधादिके रक्ते इति यादवः । नास्ति शरणं रक्षिता यस्य सोऽशरणकस्तस्य मे मोक्षो देव्याः सकाशाद्विमुक्तिर्नास्ति ॥

(३४) राजेति । नागरिकवृत्त्या विदग्धस्वभावेन एनां सान्त्वय कोपान्निवर्तय ॥

अहिणवमहुलोहभाविदो
तह परिचुम्बिअ चूअमञ्जरिम् ।
कमलवसदिमेत्तणिव्वुदो
महुअर विम्हरिदोसि णं कहं ॥ (२८)

राजा ॥ अहो रागपरिवाहिणी गीतिः । (२९)

विदू ॥ भो वअस्स किं दाव से गीदिआए अवि गहीदो भवदा अक्खरत्थो । (३०)

---

(२८) गानमाह अहिणवेत्यादि । अभिनवमधुलोभभावितस्तथा परिचुम्ब्य चूतमञ्जरीम् । कमलवसतिमात्रनिर्वृतो मधुकर विस्मृतोऽस्येनां कथम् ॥ हे मधुकर भ्रमर अभिनवस्य अचिरोद्भूतस्य मधुनो रसस्य लोभेन भावित प्राप्त सन् । मधु क्षौद्रे जले क्षीरे मद्ये पुष्परसे इति विश्वः । भावित वासिते प्राप्ते इति मेदिनी । चूतमञ्जरीमाम्रमुकुलं तथा परिचुम्ब्य कमले पद्मे वसतिमात्रेण वासमात्रेण निर्वृत-सुस्थितस्त्वम् । धाम्नि वसतिरिति त्रिकाण्डशेषः । एनां चूतमञ्जरीं कथं विस्मृतो विस्मर्तुमारभमाणोऽसि । शेषादिति क्त इत्यादिकर्मण्यपि कर्तरि क्तः । यद्वाऽधर्मं विभक्ता भ्रातर इतिवत् क्वचिदन्यत्रापि कर्तरि क्तो बोध्यः । प्राकृतत्वाद्वाव्या-मभ्रंशो वा । एतदिदमपरवक्त्रं नाम । तदुक्तम् । अयुजि न नरला गुरु समे तदपरवक्त्रमिदं नजौ जराविति । तत्र गीयमानं प्रच्छेदकाख्यलास्याङ्गं भवति तदुक्तम् । अन्यासक्तं पतिं मत्वा प्रेमविच्छेदमन्युना । वीणा पुरःसरं गानं स्त्रियां विच्छेदको मत इति ॥

(२९) राजेति । अहो विस्मये । रागो गान्धारादिस्वरः । रागस्तु मात्सर्ये लोहितादिषु क्लेशादावनुरागे च गान्धारादौ भूपेऽपि चेति मेदिनी । तत्परि सर्वतोभावेन स्रवति विनेति यावत् । वहतीति रागपरिवाहिणी । गीति-र्गानम् ॥

(३०) विदू इति । भो इत्यादि । भो वयस्य किं तावदस्या गीतिकाया अपि

पुरो॥

स्त्रीसंस्थानञ्चाप्सरस्तीर्थमारा-
दुत्क्षिप्यैनां ज्योतिरेना तिरोऽभूत्॥ (१७७)

सर्वे॥ विस्मयं रूपयन्ति। (१७८)

राजा॥ भगवन् प्रागेवास्माभिरेषोऽर्थः प्रत्यादिष्टः किं वृथा तर्केणान्विष्यते विश्राम्यताम्। (१७९)

पुरोधाः॥ विजयस्व। इति निष्क्रान्तः। (१८०)

राजा॥ वेत्रवति पर्याकुलोऽस्मि शयनीयस्थानमार्गमादेशय। (१८१)

---

(१७७) पुरो इति। पुरोधा मनुष्यस्त्रीसंस्थानपरार्थं चाह स्त्रीति। स्त्रीया संस्थान-मात्रातिरिव संस्थानं यस्य तत् तथोक्तम्। संस्थानमाकृतौ न्यासे सन्निवेशे चतुष्पथे इति मेदिनी। अप्सरस्तीर्थं अप्सरसामिव तीर्थं दर्शनं यस्य तत् अप्सरोवद्दृश्यमानमिति यावत्। तीर्थस्तन्निपानागम उपाध्याये दर्शने चेति शब्दाब्धिः। अथवा अप्सरस तीर्थं योनि-र्यस्य तत् अप्सरोयोनि इत्यर्थः। तीर्थं योनौ जलावतारे चेति हलायुधः। ज्योति-रेव च। तत्वर्णव्याहरत्यर्थे स्त्रीसंस्थानमिति। आरात् समीपादेत्य आकाशगङ्गे क्रोडे उत्क्षिप्य उत्तोल्य तिरोऽभूत् अन्तर्हितमभूत्। तिरोऽन्तर्धौ तिर्यगर्थे इत्यमरः। द्वौ चकारौ शब्दद्वयगतौ क्रिययोः पौर्वापर्यमव्यवहितं बोधयतः। इयं शालिनी नाम वृत्तम्। तदुक्तम्। ह्रस्वो वर्णो जायते यत्र यत्र कम्बुग्रीवे महदेवाद्यन्त्यौ। विश्रामस्त्वासन्धि वेदे तुरङ्गे तां भाषन्ते शालिनीं कम्बुग्रीवा इति॥

(१७८) सर्वे इति। रूपयन्ति नाटयन्ति॥

(१७९) राजेति। एषोऽर्थः शकुन्तलारूपं वस्तु। प्रत्यादिष्टो निराकृतः। इदानीं मातृपत्नेऽपि सन्देहादर्थपदप्रयोगः। तर्केण किमेवं किमेवमिति विचारेण। वृथा मिथ्या। अन्विष्यते अनुसन्धीयते॥

(१८०) पुरो इति। सुगमम्॥

(१८१) राजेति। पर्याकुलः परिश्रान्तः। शय्यतेऽस्मिन्निति शयनीयम्। अधि-करणे अनीयर्। तच्च तत् स्थानञ्चेति तस्य मार्गम्॥

प्रती॥ इदो इदो देवो। इति प्रस्थिताः। (१८२)

राजा॥ परिक्रम्य स्मरन्। (१८३)

कामं प्रत्यादिष्टां स्मरामि न परिग्रहं मुनेस्तनयाम्।
बलवत्तु दूयमानं प्रत्याययतीव मां हृदयम्॥ (१८४)

इति निष्क्रान्ताः सर्वे। पञ्चमोऽङ्कः। (१८५)

---

(१८२) प्रतीति। इद इत्यादि। इत इतो देव। सुगमम्॥

(१८३) राजेति। सुगमम्॥

(१८४) काममिति। प्रत्यादिष्टां निराकृतां मुनेस्तनयां परिग्रहं परिणीतां कामं पर्याप्तं न स्मरामि। बलवद्दूयमानमतिशयेन खिद्यमानम्। दूङ खेदे इति कविकल्पद्रुमः। हृदयं मनस्तु मां प्रत्याययति परिणीतपूर्वतया विश्वासयतीव। इयं आर्य्या॥

(१८५) इतीति। एतदङ्कः समाप्त इत्यर्थः॥

इति श्रीकृष्णनाथपञ्चाननकृतायामभिज्ञानशकुन्तलटीकायां
प्रकाशिकाख्यायां पञ्चमाङ्कविवरणम्॥

# अथ पञ्चमाङ्कांशोऽङ्कावतारः।

ततः प्रविशति नागरकश्यालः पश्चाद्बद्धं पुरुषमादाय रक्षिणौ च। (१)

रक्षिणौ ॥ पुरुषं ताडयित्वा ॥ अले कुम्भिलआ कधेहि [illegible] तुए एशे महामणिभाशुले उक्किण्णणामक्खले लाअकीए [illegible]ए शमाशादिदे। (२)

पुरुषः ॥ भीतिनाटितकेन ॥ पशीदन्तु पशीदन्तु मे भावमिश्शे ण हग्गे ईदिशश्श अकज्जश्श कालके। (३)

---

(१) तत इति। नागरको नगरस्य प्रधानरक्षकः तस्य श्यालः पत्नीभ्राता। श्यालाः स्युर्भ्रातरः पत्न्याः इत्यमरः। पश्चाद्बद्धं पृष्ठलग्नबाहुं कृत्वा बद्धम्। पुरुषं कमपि जनम्। आदायेत्यस्य कर्त्तारौ रक्षिणौ। रक्षिणौ रक्षकौ च प्रविशतः इति शेषः॥

(२) रक्षिणाविति। ताड़यित्वा आहत्य। अले इत्यादि। अरे कुम्भिलक कथय कुत्र त्वया एतन्महामणिभासुरमुत्कीर्णनामाक्षरं राजकीयमङ्गुरीयकं समासादितम्। कुम्भिलकः चौरः। कुम्भिलः शालमीने च चौरे श्लोकार्थचौरयोरिति मेदिनी। भसुरेति। महामणिना भासुरं दीप्तिमत्। भिड्डारभल्लो घुर इति घुरः। उत्कीर्णानि अङ्कितानि नामाक्षराणि यत्र तत्। समासादितं प्राप्तम्॥

(३) पुरुष इति। भीतिनाटितकेन [illegible]व्यापारेण। पसीति। प्रसीदन्तु प्रसीदन्तु मे भावमिश्राः नाहमीदृशस्याकार्यस्य कारकः। भावमिश्राः भावेषु विद्वत्सु गौरविताः। भावो विद्वानित्यमरः। गौरविताद्यार्थ्यमिश्राः [illegible] इति शिक्षाऽनुशेषः। अकार्यस्य चौर्यस्य॥

एक ॥ किणु क्खु शोहणे बह्मणेऽसि त्ति कदुअ लञ्ञा दे पडिग्गहे दिण्णे। (४)

दुदय ॥ शुणुध दाव हग्गे क्खु शक्कावदालवाशी धीवले। (५)

द्वितीय ॥ अले पाडच्चले किं तुमं अह्मेहिं वशदिं जादिञ्च पुच्छीअसि। (६)

नाग ॥ सूअअ कधेदु सव्वं अणुक्कमेण मा अन्तरा पडिबन्धेध। (७)

उभौ ॥ जं आवुत्ते आणवेदि कधेहि ले। (८)

---

(४) एक इति। रक्षिणोरिति शेषः। किणित्यादि। किन्नु खलु शोभनो ब्राह्मणोऽसीति कृत्वा राज्ञा ते प्रतिग्रहो दत्तः। प्रतिग्रहः प्रतिग्राह्यम् ॥

(५) द्वय इति। शुणुधेत्यादि। शृणुत तावत् अहं खलु शक्रावतारवासी धीवरः। शक्रावतारो गङ्गातीरगतप्रदेशविशेषः। धीवरः कैवर्त्तः। कैवर्त्ते दाशधीवरावित्यमरः ॥

(६) द्वितीय इति। रक्षिणोरिति शेषः। अले इत्यादि। अरे पाटच्चर किं त्वमस्माभिः वसतिं जातिञ्च पृच्छ्यसे। पाटच्चरश्चौरः। चौरैकागारिकस्तेनदस्युतस्करमोषकाः। प्रतिरोधिपरास्कन्दिपाटच्चरमलिम्लुचा इत्यमरः। पृच्छ्यते द्विकर्मकगणे याचादौ पाठात् त्वमिति गौणकर्मणि कर्म्मप्रत्ययो न वसतिजात्योर्मुख्ययोरपि। तदुक्तं ण्यादिप्रत्याढगत्यर्थाः मुख्ये ढल्यमानु। गौणे याचादयोऽन्येषु प्रथमे द्विदशुक्तिनीति।

(७) नागेति। सूअअ इत्यादि। सूचक कथयतु सर्वमनुक्रमेण। मा अन्तरा प्रतिबध्नीथ। 'सूचक' इति द्वितीयरक्षिणो नामधेयम्। 'अनुक्रमेण' यथाक्रमेण। 'अन्तरा' मध्ये वाक्यस्येति शेषः। अन्तरान्तरेणान्तरा। अन्तरेण च मध्येस्युरित्यमरः। मा प्रतिबध्नीथा। प्रतिबन्धको मा भूः ॥

(८) उभाविति। रक्षिणावित्यर्थः। जमित्यादि। यदावुत्त आज्ञापयति। कथ रे। आवुत्तो भगिनीपतिः। भगिनीपतिरावुत्त इत्यमरः। लय कथय ॥

एक॰ ॥ किणु क्खु शोत्तिये बह्मणेशि त्ति कदुअ लज्जा दे पडिग्गहे दिण्णे । (४)

पुरुष ॥ शुणुध दाव हग्गे क्खु शक्कावदालवाशी धीवले । (५)

द्वितीयः ॥ पाले पाटच्चले किं तुमं अह्मेहिं वशदिं जादिं च पुच्छीअशि । (६)

श्याल ॥ सूअअ कधेदु सव्वं अणुक्कमेण मा ऽन्तरा पडिबन्धेध । (७)

उभौ ॥ जं आवुत्ते आणवेदि कधेहि ले । (८)

---

(४) एक इति । रक्षिणोर्विशेषः । किण्वित्यादि । किन्नु खलु श्रोत्रियो ब्राह्मणोऽसीति कृत्वा राज्ञा ते प्रतिग्रहो दत्तः । प्रतिग्रहः प्रतिग्राह्यः ॥

(५) पुरुष इति । शुणुधेत्यादि । शृणुत तावत् अहं खलु शक्रावतारवासी धीवरः । शक्रावतारो गङ्गातीरगतः प्रदेशविशेषः । धीवरः कैवर्त्तः । कैवर्त्ते दासधीवरावित्यमरः ॥

(६) द्वितीय इति । रक्षिणोरिति शेषः । पाले इत्यादि । अरे पाटच्चर किं त्वमस्माभिः वसतिं जातिञ्च पृच्छ्यसे । पाटच्चरश्चौरः । चौरैकागारिकस्तेनदस्युतस्कर- [illegible] । प्रतिरोधिपरास्कन्दिपाटच्चरमलिम्लुचा इत्यमरः । पृच्छते द्विकर्मकगणने

(१५) नागेति । आत्मान [illegible] अन्तर-गतमिति नास्ति सन्देहः यतोऽयमामिषगन्धो वाति । आगमः इदानीमेतस्यैव विमष्टव्यः तदेव राजकुलमेव गच्छामः । जालुक इति प्रथमरक्षिणो नाम । यत इत्यादि । यतो यस्मादयमामिषगन्धो मत्स्यगन्धो वाति गच्छति । एतस्य अङ्गुरीयकस्य एष धीवरोऽस्य आगमः आगतेर्मूलम् इदानीं विमष्टव्यो विचारणीयः न उपेक्षणीय इत्यर्थः । एत आगच्छत । राजकुलं राजभवनम् । कुलं जनपदे गोत्रे सजातीयगणे पिच । भवने च तनौ क्लीबमिति मेदिनी ॥

(१६) रक्षिणाविति । धीवरं चौरत्वेनाभियुक्तम् । गच्छेत्यादि । गच्छ रे ग्रन्थिच्छेदक, गच्छ । रे इति तुच्छसम्बोधने । सम्बोधनेऽङ्ग भोः पाट् प्याट् हे है हंहोऽरेरेपि चेति हेमचन्द्रः । ग्रन्थिच्छेदकश्चौरः ॥

इति परिक्रामन्ति। (१७)

नाग॥ सूचअ बुध गोउलदुआले अप्पमत्ता पडिपालेध मं जाव लाअउलं पवेसिअ णिक्कमामि। (१८)

उभौ॥ पविशदु आवुत्ते शामिप्पशादत्थं। (१९)

नाग॥ परिक्रम्य निष्क्रान्तः। (२०)

सूच॥ जालुअ चिलाअदि क्खु आवुत्ते। (२१)

जालु॥ णं अवशलोवशप्पणीआ लाआणो होन्ति। (२२)

सूच॥ फुलन्ति मे अग्गहत्था इमं गण्ठिच्छेदअं वावादिदुं। (२३)

---

(१७) इतीति। इति एवमुक्त्वा इत्यर्थः। परिक्रामन्ति राजकुलगमनं रूपयन्ति धीवरसहिता सर्वे इति शेषः॥

(१८) नागेति। सूचअ इत्यादि। सूचक इह गोपुरद्वारे अप्रमत्तौ प्रतिपालयतं मां यावद्राजकुलं प्रविश्य निष्क्रामामि। गोपुरद्वारे गोपुरसंज्ञके द्वारे। पुरद्वारन्तु गोपुरमित्यमरः। अप्रमत्तौ धीवरं प्रति सावधानौ। प्रमादोऽनवधानतेत्यमरः। प्रतिपालयतं युवां प्रतीक्षेथाम्। निष्क्रामामि। प्रत्यागच्छामि। आर्षोऽपिपिबं इति दीर्घः॥

(१९) उभाविति। पविशदु इत्यादि। प्रविशतु आवुत्त स्वामिप्रसादार्थम्। स्वामिनो भर्त्तुः प्रसादार्थं प्रसन्नतार्थम्॥

(२०) नागेति। परिक्रम्य राजकुलप्रवेशं रूपयित्वा॥

(२१) सूचेति। जालुअ इत्यादि। जालिक चिरयति खल्वावुत्त। चिरयति विलम्बं करोति। खलु प्रश्ने कथमित्यर्थः॥

(२२) जालु इति। णमित्यादि। नन्ववसरोपसर्पणीया राजानो भवन्ति। ननुरत्रानु प्रश्ने। ननुशब्दो विनिश्चये। अनुनये इति मेदिनी। राजानोऽवसरेण्यावकाशेन एव अभगोया उपगम्या भवन्ति ननु॥

(२३) सूचेति। फुरन्तीत्यादि। स्फुरतो मे अग्रहस्तौ इमं ग्रन्थिच्छेदकं व्यापादयितुम्। स्फुरत स्पन्देते। अग्रहस्तौ पाणी। व्यापादयितुं मारयितुम्॥

धीव ॥ णालिहदि भावे अकालणमालके भविदुम् । (२४)

जानु ॥ विलोक्य ॥ एशे अह्माणं भुट्टालके पत्ते गेह्णिअ लाअ-शाशणं पाअच्छदि शम्पदं एशे शउलाणं मुहं पेक्खदु अहमा गिद्ध-शिआलाणं बली होदु । (२५)

नाग ॥ प्रविश्य ॥ सिग्घं सिग्घं एदं । इत्यर्द्धोक्ते । (२६)

धीव ॥ हा हदोह्मि । इति विषादं नाटयति । (२७)

नाग ॥ मुञ्चध जालोवजीविणं । उववण्णे से अङ्गुलिअअस्स आगमे अह्म शामिणा जाव कधिदं । (२८)

---

(२४) धीवेति । णालीत्यादि । नार्हति भावोऽकारणमारको भवितुम् । भावो विद्वान् । अकारणमारकः अनिमित्तघातकः ॥

(२५) जान्विति । विलोक्य पश्चात् दृष्ट्वा । एषे इत्यादि । एषोऽस्माकमीश्वरः पत्रे गृहीत्वा राजशासनमागच्छति । साम्प्रतमेव शकुन्तानां मुखं प्रेक्षतां अथवा गृध्रशृगालानां बलिर्भवतु । अस्माकमीश्वरो नागरकश्यालः । पत्रे गृहीत्वा पश्चाद्दर्श्य गृहीत्वा । राजशासनं राजादेशम् । एष धीवरः । शकुन्तानां विहङ्गमानाम् । बलिरुपहारः । दण्डादण्डयोरुभयोरेव सम्भवादिति भावः । करोपहारयोः पुंसि बलिः प्राण्यङ्गजे स्त्रियामित्यमरः ॥

(२६) नागेति । प्रविश्य रङ्गभूमिं मितिशेषः । सिग्घमित्यादि । शीघ्रं शीघ्रमेतम् । इत्यर्द्धोक्ते मुञ्चतं जालोपजीविन मित्यनस्य वाक्यस्यार्द्धे उक्ते ॥

(२७) धीवेति । हेत्यादि । हा हतोऽस्मि । हा विषादे । विषादं विषण्णतां नाटयति रूपयति । मारयतमिति वाक्यशेषमनुमायेति भावः ॥

(२८) नागेति । मुञ्चधेत्यादि । मुञ्चतं जालोपजीविनम् । उपपन्नोऽस्याङ्गुरीयस्यागमः । अस्मत्स्वामिना यावत् कथितम् । उपपन्नो युक्तः । यावत् यदा अस्मत्स्वामिना राज्ञा कथितं तदा उपपन्न इत्यन्वयः ॥

सूच ॥ जधा आणवेदि आवुत्ते जमवसदिं गदुअ पडिणिउत्ते क्खु एशे। इति धीवरं बन्धनान्मोचयति। (२९)

धीव ॥ भट्टके अम्पदं तुह केलके मे जीविदे। इति पादयोः पतति। (३०)

जानु ॥ उट्ठेहि एसे भट्टिणा अङ्गुलीअमुल्लसम्मिदे पारिदोसिए दे पसादीकदे ता गेह्न एदं। इति धीवराय कटकं ददाति। (३१)

धीव ॥ सहर्षं सप्रणामञ्च प्रतिगृह्य ॥ अणुग्गहीदोह्मि। (३२)

जानु ॥ एसे क्खु रण्णा तधा अणुग्गहिदे जधा शूलादो ओदालिअ हत्थिक्खन्धे समालोविदे। (३३)

सूच ॥ आवुत्त पालिदोसिएण जाणामि महालिहलदणेण अङ्गुलीअएण सामिणो बहुमदेण होदव्वं। (३४)

---

(२९) सूचेति। जधेत्यादि। यथाज्ञापयत्यावुत्तः। यमवसतिं गत्वा प्रतिनिवृत्तः खल्वेषः। यमवसतिं यमवेश्म ॥

(३०) धीवरेति। भट्टके इत्यादि। भर्त्तः साम्प्रतं तव क्रीतकं मे जीवितम्। क्रीतकं क्रीतम् ॥

(३१) जानुकेति। उट्ठेहीत्यादि। उत्तिष्ठ एतद्भर्त्रा अङ्गुरीयमूल्यसम्मितं पारितोषिकं ते प्रसादीकृतं तद्गृहाणैतत्। भर्त्ता राजा। अङ्गुरीयस्य यन्मूल्यं तत्सम्मितं तत्परिमितं पारितोषिकं परितोषदत्तं वस्तु प्रसादीकृतं प्रसन्नतास्वरूपीकृतम्। कटकं वलयं। कटकं वलयोऽस्त्रियामित्यमरः ॥

(३२) धीवरेति। अणुग्गेत्यादि। अनुगृहीतोऽस्मि। अनुगृहीतः कृतानुग्रहः ॥

(३३) जानुकेति। एसे इत्यादि। एष खलु राज्ञा तथानुगृहीतः यथा शूलादवतार्य हस्तिस्कन्धं समारोपितः। एष धीवरः। शूलात् वध्यवधार्थरोपितादयः कीलकात्। अवतार्य उत्तोल्य नमयित्वा। समारोपितो निवेशितः ॥

(३४) सूचेति। आवुत्त इत्यादि। आवुत्त पारितोषिकेण जानामि महार्हरत्नेन अङ्गुरीयकेण स्वामिनो बहुमतेन भवितव्यम्। जानामि अनुमिनोमि। महार्हरत्नेन महामूल्यरत्नभूतेन। स्वामिनो बहुमतेन राज्ञः समादृतेन ॥

नाग ॥ ण तस्सिं भट्टिणो महाविड्ढलद्दण्णं त्ति कदुअ पलिदोसो एत्ति उण तक्केमि। (३५)

• उभौ ॥ किं उण। (३६)

नाग ॥ तस्स दंसणेण भट्टिणा कोवि अहिमदो जणो सुमरिदो त्ति जदो सुहुत्तअं पइदिगभीरोवि पज्जुस्सुअमणा आसी। (३७)

छत्र ॥ दोशिदे शोइदे च दाणिं भट्टा आवुत्तेण। (३८)

जालु ॥ णं भणेमि इमस्स मच्छग्गमुणो कदे। इति धीवरमसूयया पश्यति। (३९)

धीव ॥ भट्टालके इदो अद्धं तुम्हाणम्पि शुलामुल्लं होदु। (४०)

---

(३५) नागेति। णेत्यादि। न तस्मिन् भर्तुर्महाहरत्नमिति कृत्वा परितोष। एत-त्पुनस्तर्कयामि। तस्मिन्नङ्गुरीये। महाहरत्नमुत्कृष्टरत्नम्। एतत् वक्ष्यमाणम्॥

(३६) उभाविति। किं उण। किं पुन॥

(३७) नागेति। तस्सेत्यादि। तस्य दर्शनेन भर्त्रा कोऽप्यभिमतो जन स्मृत इति यतो मुहूर्त्तं प्रकृतिगम्भीरोऽपि पर्य्युत्सुकमना आसीत्। तस्य अङ्गुरीयस्य। भर्त्रा राज्ञा। अभिमतो वाञ्छित। इतोति तर्कयामीत्यन्वितम्। मुहूर्त्तं कञ्चित्कालं व्याप्य पर्य्युत्सुक-मना आसीदिति सम्बन्ध। प्रकृतिगम्भीर प्रकृत्या स्वभावेन गम्भीर। पर्य्युत्सुकमना उत्कण्ठितमना॥

(३८) सूचेति। दोशिदे इत्यादि। तोषित पोषित चेदानीं भर्त्ता आवुत्तेन। पोषित पोषं गमित। आवुत्तेन भवता॥

(३९) जालु इति। णमित्यादि। ननु भणामि अस्य मत्स्यघातिनो कृते। नन्वहं भणामि यत् अस्य मत्स्यघातिनोऽर्धीवरस्य कृते अयं भर्त्ता आवुत्तेन पोषित इति शेष। तस्मा-वुत्तेन सार्धं भर्त्ता पोषित इति भाव। अयं कृतेऽव्यय तावत् तादर्थ्ये वर्त्तते इयमिति कोषसार। असूयया दोषारोपणेन॥

(४०) धीवेति। भट्टेत्यादि। भट्टारक इतोऽर्द्धं युष्माकमपि सुरामूल्यं भवतु। इतो राजप्रसादीकृतकटकस्य। सुरामूल्यं मद्यक्रयोपयोगि॥

# अभिज्ञानशकुन्तलम्।

## षष्ठोऽङ्कः।

ततः प्रविशत्याकाशयानेन मिश्रकेशी। (१)

मिश्र॥ णिव्वत्तिदं मए पज्जाअणिव्वत्तणिज्जं अच्छरातित्थं सन्दिट्ठं ता जाव साहुजणस्स अहिसेअकालो भवे दाव सम्पदं इमस्स राएसिणो वुत्तन्तं पच्चक्खीकरिस्सं मेणआसम्बन्धेण सरीरभूदा दाणिं मे सउन्तला तएअ दुहिदुणिमित्तं सन्दिट्ठ-पुव्वम्हि। (२)

जानु ॥ धीवल महत्तले अम्पदं अह्माणं पिअवअस्सके ग्रंवुत्तेशि कादम्बलीशक्खिके क्खु पढमं शोहिदे इच्छीअदि ता एहि शुण्डि-आलअं ज्जेव गच्छह्म । (४१)

इति निष्क्रान्ताः सर्वे । अङ्कावतार । (४२)

---

(४१) जानु इति । धीवलेत्यादि । धीवर भट्टारक साम्प्रतमस्माकं प्रियवयस्य संवृत्तोऽसि कादम्बरीसाक्षिकं खलु प्रथमसौहृदमिष्यते तदेहि शौण्डिकालयमेव गच्छाम । भट्टारक अतिमहान् । साम्प्रतमिदानीम् । कादम्बरीत्यादि । प्रथमसौहृदं प्रथमसौहार्दं कादम्बरी मदिरैव साक्षी प्रत्यक्षदर्शिजनस्वरूपा यस्य तत् तथोक्तं खलु तथाभूतमेव इष्यते लोकैरिति शेषः । उक्तं समक्षदर्शनात् साक्षीति । यावच्छावादयो मद्यपाश्चिरमेव परिणयनव्यापारं निर्वर्त्तयन्तीति प्रथमसौहृदशब्दम् । गन्धोत्तमा प्रसन्नेरा कादम्बर्यः परिस्नुता । मदिराकश्यमद्यानेत्यमरः । साक्षिपदोत्र प्रत्यक्षदर्शिजनवाचकतया उद्देश्य-विधेयभावान्वितत्वा न पुस्त्वं जहाति । अत उक्तम् । उद्देश्यविधेयभावे लिङ्गता नास्ति सन्ततेति । तत् तस्मात् एहि आगच्छ शौण्डिकालयं सुराकारालयमेव गच्छामः ॥

(४२) इतीति । एवमुक्त्वा तत्याजित्यर्थः । अङ्कावतारः षष्ठाङ्कावतरकः पञ्चमाङ्कीय । तदुक्तम् । अङ्कान्ते सूचित पात्रैस्तदङ्कस्याविभागतः । यत्राङ्कोऽवतरत्येषोऽङ्कावतार इति स्मृत इति । अत्र पात्रैर्नागरकश्यालादिभिर्नृपतेरङ्गुलीयकदर्शनादिरूपनाहिरक्षामस्मारद-र्शनात्मक षष्ठाङ्कोऽवतरति ॥

इति श्रीकृष्णनाथपञ्चाननकृतायामभिज्ञानशकुन्तलटीकायां
प्रवेशिकाख्यायामङ्कावतारनाम
पञ्चमाङ्कीयविवरणम् ॥

ततः प्रविशति चूताङ्कुरमालोकयन्ती चेटी तत्पृष्टेऽपरा च। (४)

प्रथमा ॥ कधं उवत्थिदो महुमासो। (५)

आतम्महरिअपेण्डं उस्ससिअं विअ वसन्तमासस्स।
दिट्ठं चूअङ्कुरअं छणमङ्गल्लं णिअच्छामि ॥ (६)

द्वितीया ॥ परहुदिए किं एदं एआइणी मन्तेसि। (७)

प्रथमा ॥ महुअरिए चूअकलिअं पेक्खिअ उम्मत्तिआ क्खु परहुदिआ होदि। (८)

---

चतुरस्रियत्वा सती उपलप्स्येऽत्र प्रायशाम्। नार्धेनावतीर्य्य आकाशादवतरणं रूप यित्वा ॥

(४) तत इति। चूताङ्कुरमाम्रमुकुलम्। चेटी धात्रीविशेष। तत्पृष्ठे तत्पश्चात्। अपरा चेटीत्यर्थः ॥

(५) प्रथमेति। प्रथमा चेटीत्यर्थः। कथमित्यादि। कथमुपस्थितो मधुमासः। मधुमासो वसन्तमासः। मधु। दैत्ये चैत्रे वसन्ते चेति विश्वः। चूताङ्कुरैरिव चूतकलिकालोकनान्मधुमासस्यानुमानम् ॥

(६) आतम्रेत्यादि। आताम्रहरितपाण्डुरं उच्छ्वसितमिव वसन्तमासस्य। दृष्टं चूताङ्कुरकं क्षणमङ्गल्यं नियच्छामि। आताम्रमीषल्लोहितं हरितं पालाशवर्णञ्च एवं वर्णं यस्य तत्। आताम्रं पाटलं विपदारुणमिति धनञ्जयः। पालाशो हरितो हरिदिति हलं प्रथमवर्णमिति चामरः। वसन्तमासस्य उच्छ्वसितं जीवितमिव दृष्टं चूताङ्कुरकं चूतमुकुलं क्षणे उत्सवे वसन्तमासविहिते इति यावत् मङ्गल्यं मङ्गलाय हितं नियच्छामि निश्चिनोमि। वसन्तमासस्य उच्छ्वसितमिव इत्थमिति उत्प्रेक्षणमुत्तरे हेतुरभेय। निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षण इत्यमरः। नियमो यन्त्रणायाञ्च प्रतिज्ञानिश्चये व्रते इति मेदिनी। अत्रोच्छ्वसितमिवेत्युत्प्रेक्षा। छन्दस्तु गाथाख्यम् ॥

(७) द्वितीयेति। अपरा चेटीत्यर्थः। परेत्यादि। परभृतिके किं एकाकिनी मन्त्रयसे। परभृतिकेति प्रथमचेटीसंज्ञा। मन्त्रयसे अस्पष्टं व्याहरसि ॥

(८) प्रथमेति। मधु इत्यादि। मधुकरिके चूतकलिकां प्रेक्ष्य उन्मत्ता खलु परभृतिका भवति। मधुकरिकेति। द्वितीयचेटीनाम ॥

द्वितीया ॥ सहर्षं त्वरया उपगम्य ॥ कधं उवत्थिदो महुमासो । (९)

प्रथमा ॥ महुअरिए तवावि एसो कालो मदविब्भमगीदाणं । (१०)

द्वितीया ॥ सहि अवलम्बस मं जाव अग्गपदे परिट्ठिदा भविअ चूअप्पसवं गेह्णिअ सम्पादेमि कामदेवस्स अच्चणं । (११)

प्रथमा ॥ जइ एव्वं ता ममावि अद्धं अच्चणफलस्स । (१२)

द्वितीया ॥ सहि अभणिदेवि एदं सम्पज्जइ एव्व जदो एक्कं ज्जेव णो एदं सरीरं द्विधा भिण्णं पजावइणा । (१३)

---

(९) द्वितीयेति । उपगम्य चूततरुमितिशेषः । कथमित्यादि । कथमुपस्थितो मधुमासः । कधं किं ॥

(१०) प्रथमेति । महु इत्यादि । मधुकरिके तवाप्येष कालो मदविभ्रमगीतानाम् । तवापि मदविभ्रमोद्गीतानां मदेन मत्ततया यो विभ्रमस्तत्प्रयुक्तानां गीतानामेष कालः ॥

(११) द्वितीयेति । सहीत्यादि । सखि अवलम्बस्व मां यावदग्रपदे परिस्थिता भूत्वा चूतप्रसवं गृहीत्वा सम्पादयामि कामदेवस्यार्चनम् । अवलम्बस्व पतनप्रतिबन्धाय धारय । अग्रपदे अङ्गुलिदलमात्रे । दैर्घ्यायासवशात्पार्ष्णिभूमित्यर्थः । चूतप्रसवं चूतकुसुमम् । स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने इत्यमरः । कामदेवस्य मदनस्य वसन्तोत्सवे कामस्यार्चनयोग्यत्वात् ॥

(१२) प्रथमेति । जइ इत्यादि । यद्येवं तर्हि ममाप्यर्धमर्चनफलस्य । यदि एवं मत्कृतावलम्बनेन चूतप्रसवग्रहणं तव तदा अर्चनफलस्य त्वत्कृतकामदेवार्चनफलस्य अर्धं ममापि स्यात् ॥

(१३) द्वितीयेति । सहीत्यादि । सखि अभणितेऽपि एवं सम्पद्यत एव यत एकमेवावयोरिदं शरीरं द्विधाभिन्नं प्रजापतिना । यत् मत्कृतकर्मणोऽर्धफलभागिनी । सम्पद्यते जायते । चेदमाह यत इत्यादि । द्विधाभिन्नं द्विधाकृतं प्रजापतिना विधात्रा ।

उभे ॥ भीते ॥ पसीददु पसीददु अज्जो अणहिदत्था अम्हे। (१८)

कञ्चु ॥ हुं न किल श्रुतं भवतीभ्यां यद्वासन्तैस्तरुभिरपि देवस्य शासनं प्रमाणीकृतं तदाश्रयिभिश्च। तथाहि। (१९)

चूतानां चिरनिर्गतापि कलिका बध्नाति न स्वं रजः
सन्नद्धं यदपि स्थितं कुरबकं तत् कोरकावस्थया।
कण्ठेषु स्खलितं गतेऽपि शिशिरे पुंस्कोकिलानां रुतं
शङ्के संहरति स्मरोऽपि चकितस्तूणार्द्धकृष्टं शरम्॥ (२०)

---

(१८) उभे इति। चेट्यावित्यर्थे। भीते सत्यौ। पसीदेत्यादि। प्रसीदतु प्रसीदत्वार्यः अगृहीतार्थे आवाम्। अगृहीतोऽविदितो वसन्तोत्सवप्रतिषेधरूपोऽर्थो याभ्यां ते अगृहीतार्थे॥

(१९) कञ्चु इति। हुमिति परिप्रश्ने। हुं वितर्के परिप्रश्ने इत्यमरः। देवस्य राज्ञो यद् शासनमाज्ञा। अववादस्तु निर्देशो निदेशः शासनञ्च सः। शिष्टिश्चाज्ञा चेत्यमरः। शासनं वसन्तसम्बन्धिभिः। पुष्पैरुपयोगादिति भावः। तदभिसदाश्रयिभिर्विहङ्गैश्च प्रमाणीकृतम् अवगतं तत् भवतीभ्यां किल भवतीभ्यामेव न श्रुतम्। तद्रूपां तदाश्रयिणाञ्च देवशासनानमनं दर्शयितुमाह तथाहीति॥

(२०) चूतानामिति। चूतानां रसालानां चिरनिर्गता प्रादुर्भूतापि कलिका मुकुलं स्वं स्वीयं रजः परागं न बध्नाति न जनयति। मदनस्यैव स्थितिकालत्वा इति भाव। यदपि कुरबकं तत्कुसुमं सन्नद्धं प्रकटीभूय बहिर्गतं तत्कोरकावस्थया अस्फुटावस्थया स्थितं तिष्ठति तथा पुमांसश्च ते कोकिलाश्चेति तेषां रुतं ध्वनिरपि। पुंसः स्खलति अस्य सम्। शिशिरे हेमन्ते गतेऽपि कण्ठे स्खलितं भग्नं अतोऽहमेवं शङ्के यत् स्मरः कामोऽपि चकितो भीत सन्। चकितः शङ्कितो भीत इति त्रिकाण्डशेषः। तूणादिषु-धेरर्द्धाकृष्टं शरं बाणं संहरति। त्यागयति। अत्र शङ्के इत्युत्प्रेक्षां द्योतयति। शङ्कां दर्शयता। अन्ये शङ्के ध्रुवं प्रायोनूनमित्येवमादिभिः। उत्प्रेक्षा व्यज्यते शब्दै-रिवशब्दोऽपि तादृश इति। शार्दूलविक्रीडितं वृत्तम्॥

मिश्र ॥ णत्थि एत्थ सन्देहो महाप्पहावो क्खु राएसी। (२१)

प्रथमा ॥ अज्ज कदिचिदिअसाइं मित्तावसुना रट्ठिएण भट्टिणो पादमूलं पेसिदा अह्मे इध पमदवणे चित्तकम्म अप्पिदुं ता आगन्तुअदाए ण सुदपुव्वो अह्मेहिं एसो वुत्तन्तो। (२२)

कञ्चु ॥ तेन हि न पुनरेवं प्रवर्त्तितव्यम् (२३)।

उभे ॥ सकौतूहलम् ॥ अज्ज जइ इमिणा जणेण सोदव्वं ता कहेदु अज्जो किं निमित्तं भट्टिणा वसन्तुच्छवो पडिसिद्धो त्ति। (२४)

मिश्र ॥ उच्छवप्पिआ क्खु राआणो होन्ति ता एत्थ गुरुणा कारणेण होदव्वं। (२५)

---

(२१) मिश्रेति। णत्थीत्यादि। नास्त्यत्र सन्देहो महाप्रभावः खलु राजर्षिः। अत्र चूतादिप्रमाणे॰ प्रमाणीकरणे। खलु वैतर्थे॰ ॥

(२२) प्रथमेति। अज्जेत्यादि। आर्य्य कतिचिद्दिवसानि मित्रावसुना राष्ट्रियेण भर्त्तुः पादमूलं प्रेषिते आवां इह प्रमदवने चित्रकर्मार्पयितुं तदागन्तुकतया न श्रुतपूर्व्व आवाभ्यामेष वृत्तान्तः। मित्रावसुना तन्नाम्ना। राष्ट्रियेण राजश्यालेन। राजश्यालस्तु राष्ट्रिय इत्यमरः। पादमूलं पदान्तिकम्। मूलं शिफाद्ययोः। मूलमिसेऽन्तिके च नेति मेदिनी। प्रयोजनमाह इहेति। चित्रकर्मार्पयितुं चित्रविन्यासमाचाभ्यां कार यितुम्। आगन्तुकतया आहार्य्यतया अनित्यस्थायितयेति यावत्। स्यादागन्तुक माहार्य्यमिति त्रिकाण्डशेषः। श्रुतं अवर्थं पूर्व्वं यस्य स श्रुतपूर्व्वः ॥

(२३) कञ्चु इति। न प्रवर्त्तितव्यं प्रवर्त्तनं कर्त्तव्या ॥

(२४) उभे इति। सकौतूहलं सगुणूपम्। अज्जेत्यादि। आर्य्य यद्यनेन जनेन श्रोतव्यं तत् कथयत्वार्य्य॰ किं निमित्तं भर्त्त्रा वसन्तोत्सव॰ प्रतिषिद्ध इति। श्रोतव्यं श्रवणा र्हम्। तत् तदा ॥

(२५) मिश्रेति। उच्छवेत्यादि। उत्सवप्रिया खलु राजानो भवन्ति तदत्र गुरुणा कारणेन भवितव्यम्। भवितव्यमिति भावे तव्य ॥

कञ्चु ॥ स्वगतम् ॥ बहुलीभूतोऽयमर्थः तत् किं न कथ्यते । (२६)

प्रकाशम ॥ अस्ति भवत्योः कर्णपथमायातं शकुन्तलाप्रत्यादेशकौलीनम् । (२७)

उभे ॥ अज्ज सुदं रट्ठिअमुहादो अङ्गुलीअदंसणं जाव । (२८)

कञ्चु ॥ तेन हि स्वल्पं कथयितव्यम् । यदैवाङ्गुरीयदर्शनादनुस्मृतं देवेन सत्यमूढपूर्व्वा रहसि मया तत्रभवती शकुन्तला मोहात्प्रत्यादिष्टेति तदाप्रभृत्येव पश्चात्तापमुपगतो देवः । तथाहि (२९)

रम्यं द्वेष्टि यथा पुरा प्रकृतिभिर्न प्रत्यहं सेव्यते
शय्योपान्तविवर्त्तनैर्विगमयत्युन्निद्र एव क्षपाः ।
दाक्षिण्येन ददाति वाचमुचितामन्तःपुरेभ्यो यदा
गोत्रेषु स्खलितस्तदा भवति च व्रीडावनम्रश्चिरम् ॥ (३०)

---

(२६) कञ्चु इति । स्वगतमप्रकाशम् । अनतिस्फुटमिति यावत् । अयमर्थोऽभिधेयो बहुलीभूत॰ क्रमेण बहुलीभूतः तत् तदा किं न कथ्यते न कथनीयम् ॥

(२७) प्रकाशमिति । सुस्फुटमित्यर्थः । शकुन्तलाया प्रत्यादेशस्य निराकृते॰ कौलीनं लोकवादः । स्यात् कौलीनं लोकवादे इत्यमर॰ । भवत्यो॰ कर्णपथमायातं श्रुतिगोचरमस्ति । यद्यामूलात् कथयितव्यं तदपेक्ष्य यदि स्वल्पमिदं किञ्चित् तदा कथयिष्यामीत्यभिप्रेत्य प्रश्नोयम् ॥

(२८) उभे इति । अद्येत्यादि । श्रुतं राष्ट्रियमुखादङ्गुरीयदर्शनं यावत् । "अङ्गुरीयदर्शनं यावद्राष्ट्रियमुखे" इति शेष॰ ॥

(२९) कञ्चु इति । स्वल्पमपि स्फुटमिति शेषः । कथयति यदैवेति । अङ्गुरीयदर्शनादेतो॰ "सत्यमहमेवं मया रहसि निर्जने ऊढपूर्व्वा परिणीतपूर्व्वा तत्रभवती शकुन्तला मोहात् विस्मरणात् प्रत्यादिष्टा निराकृतेति" यदनुस्मृतं तदाप्रभृति तत्कालमारभ्यैव देवो राजा पश्चात्तापमुपगत॰ प्राप्त॰ ॥

(३०) रम्यमिति । रम्यं मनोरमं वस्तु द्वेष्टि नाभिनन्दति तथा पुरा प्राक् यथा अद्येति तथा प्रत्यहं प्रकृतिभिरमात्यैः न सेव्यते उपास्यते । प्रकृतिः पञ्चाङ्गे स्वादमात्यादिस्वभावयोरिति मेदिनी । तथा उन्नता निद्रा यस्य स तथोक्तः सन् । शय्यायाः उपान्तयोः कोणयोः

मिश्र ॥ पिअं मे पिअं । (३१)

कञ्चु ॥ अस्मात् प्रभवतो वैमनस्यादुत्सवः प्रत्याख्यातः । (३२)

उभे॥ जुज्जदि । (३३)

नेपथ्ये ॥ एदु एदु भवं । (३४)

कञ्चु ॥ कर्णं दत्त्वा ॥ अये इत एवाभिवर्त्तते देवः तद्गच्छतं स्वकर्म्मानुष्ठानाय । (३५)

उभे ॥ तह । इति निष्क्रान्ते । (३६)

ततः प्रविशति पश्चात्तापसदृशवेषो राजा विदूषकः प्रतीहारी च । (३७)

---

विभर्त्तेभै पार्श्वपरिवर्त्तनेन यातायातै करणै यथा रात्री विंगमयति यापयति। तथा दाक्षिण्येन सर्वासु समरागितया यदा अन्त पुरेभ्य पत्नीभ्य अविताम्रपयुक्ता भागं ददाति तदा गोत्रेषु तत्तत्स्वामसु। गोत्रन्तु नाम्नि चेत्यमरः। स्खलित लतयकुलनामानामप्रयोग. चिरं व्रीडया अवनम्रो अवनतशिराश्च भवति। दक्षिणनायक चक्षो यथा। एषाश्रितो-ऽनुकूल समरागो दक्षिणस्तु सर्वासु। शठ एकत्रैव रतो बहिरन्यत्र प्रियोऽप्रियो भन-त्तीति। शार्दूलविक्रीडितं वृत्तम् ॥

(३१) मिश्रेति। पियमित्यादि। प्रियं मे प्रियम्। विरहवेदनोपदर्शितप्रियसखी-प्रणयावगमादिति भावः॥

(३२) कञ्चु इति। प्रभवतो निरङ्कुशात् वैमनस्यादुन्मस्कत्वात्। प्रत्याख्यातो निराकृत ॥

(३३) उभे इति। जुज्जदि युज्यते ॥

(३४) नेपथ्य इति। एदु एदु भवं एतु एतु भवान् ॥

(३५) कञ्चु । इतोऽन्य। अभिवर्त्तते आयाति। गच्छतमिति चेट्यौ प्रति। स्वक-र्म्मानुष्ठानाय चित्रकर्म्मार्पणाय ॥

(३६) उभे इति। तह तथा ॥

(३७) तत इति। सुगमम् ॥

कञ्चुकी ॥ राजानं विलोक्य ॥ अहो सर्व्वास्ववस्थासु रामणीयकमाकृतिविशेषाणाम् । तथाह्येवं वैमनस्यपरीतोऽपि प्रियदर्शनो देवः । य एषः (३८)

प्रत्यादिष्टविशेषमण्डनविधिर्वामप्रकोष्ठे श्लथं
बिभ्रत्काञ्चनमेकमेव वलयं श्वासोपरक्ताधरः ।
चिन्ताजागरणप्रताम्रनयनस्तेजोगुणैरात्मनः
संस्कारोल्लिखितो महामणिरिव क्षीणोऽपि नालक्ष्यते ॥ (३९)

---

(३८) कञ्चुकी इति । सर्व्वास्ववस्थासु दौःस्थ्यावस्थास्वपि । रमणीयस्य भावो रामणीयकं रमणीयता । आकृतिविशेषाणां विशिष्टानामाकृतीनाम् । हेतुमाह तथाहीति । वैमनस्यपरीत उत्कण्ठायुक्तः । प्रियं प्रीतिकरं दर्शनमवलोकनं यस्य स प्रियदर्शनः । य एष इति क्षीणोऽपि नालक्ष्यत इति श्लोकार्थेनान्वितम् ॥

(३९) प्रत्यादिष्टेति । प्रत्यादिष्टो निराकृतो विशेषमण्डनविधिर्नानाभूषणपरिधानं येन स तथोक्तः । तथा काञ्चनं हिरण्मयं श्लथं शिथिलं शोकशोषादिति भावः । शिथिलं प्रश्लथः श्लथ इति जटाधरः । एकमेव वलयं वामप्रकोष्ठे वामकूर्पराधो बिभ्रत् धारयन् । तथा श्वासैर्निःश्वासमारुतैरुपरक्तो व्यसनार्त्तः पीड़ां गत इति यावत् । अधरो यस्य सः । एतेन श्वासानां दीर्घत्वमुष्णत्वञ्च व्यञ्जितम् । उपरक्तो व्यसनार्त्ते राहुग्रस्तेन्दुसूर्य्ययोरिति मेदिनी । तथा चिन्तया यज्जागरणं तेन प्रताम्रे अतिलोहिते नयने यस्य स तथोक्तो य एष देवः संस्कारेण शाणादिना मलापकर्षणेन उल्लिखित तनूकृतः । स्यादुल्लिखितसत्कीर्णे तनूकृते च वाच्यवदिति मेदिनी । महामणिर्हीरक इव क्षीणोऽपि शोकशोषिततां गतोऽपि मणिपक्षे क्षुद्रोऽपि आत्मनस्तेजोगुणैः प्रभावरश्मिभिः दीप्तिरश्मिना च नालक्ष्यते क्षीणतया नावधार्य्यते । तेजः प्रभावे दीप्तौ चेत्यमरः । अत्रानङ्गदशानां कियत्यो दर्शिताः । तत्र वात्स्यायनः । दृङ्मनःसङ्गसङ्कल्पा जागरः तनुता इति । ह्रीत्यागोन्मादमूर्च्छान्ता इत्यनङ्गदशा दशेति । अत्रोपमालङ्कारः । वृत्तं शार्दूलविक्रीडितम् ॥

मिश्र ॥ राजानं विलोक्य ॥ ठाणे क्खु पच्चादेसविमाणिदावि इमस्स किदे सउन्तला किलिस्सदि । (४०)

राजा ॥ ध्यानमन्दं । परिक्रम्य । (४१)

प्रथमं सारङ्गाक्ष्या प्रियया प्रतिबोध्यमानमपि सुप्तम् ।
अनुशयदुःखायेदं हतहृदयं सम्प्रति विबुद्धम् ॥ (४२)

मिश्र ॥ णं ईदिसाइं तवस्सिणीए भाअधेआइं । (४३)

विदू ॥ अपवार्य्य ॥ हुं भूओवि लङ्घिदो एसो सउन्तलावादेण ण आणे कधं चिकिच्छिदव्वो भविस्सदि । (४४)

---

(४०) मिश्रेति । विलोक्येति क्खु किमिदृशादिति भाव । ठाणे इत्यादि । स्थाने खलु प्रत्यादेशविमानितापि अस्य कृते शकुन्तला क्लिश्यति । प्रत्यादेशेन प्रत्याख्यानेन विमानितावमानितापि शकुन्तला अस्य राजर्षेः कृते अर्थे यत् क्लिश्यति क्लेशमनुभवति तत् स्थाने युक्तम । युक्ते द्वे साम्प्रतं स्थाने इत्यमर । स्नेहसमप्रायमिति भाव ॥

(४१) राजेति । ध्यानमन्दं चिन्तालसम् ॥

(४२) प्रथममिति । सारङ्गस्य हरिणस्य अक्षिणी यस्या सा तया । सक्थ्यक्ष्णः स्वाङ्गे इति च । षित्त्वात् ङीष् । प्रियया शकुन्तलया प्रथममादौ प्रतिबोध्यमान बोधाय व्यापार्यमाणमपि सुप्तं मोहाभिभूतम इदं हतहृदयं सम्प्रति इदानीम अनुशयदुःखाय अनुतापकष्टाय विबुद्ध ज्ञातिमत भवतीति शेष । अथानुशयो दीर्घद्वेषानुतापयोरित्यमर । इयमार्या जाति ॥

(४३) मिश्रेति । णमित्यादि । नन्वीदृशानि तपस्विन्या भागधेयानि । नन्ववधारणे ईदृशान्येवेत्यर्थ । तपस्विन्या अनुकम्पार्हाया शकुन्तलाया इत्यर्थ ॥

(४४) विदू इति । हुमित्यादि । हुं भूयोपि लङ्घित एष शकुन्तलावातेन न जाने कथ चिकित्सितव्यो भविष्यति । हुं वितर्के प्रश्ने वा । हु वितर्के परिप्रश्ने इत्यमर । भूयोपि पुनरपि । लङ्घितोऽभिभूत । शकुन्तलावातेन शकुन्तला शकुन्तलेति वातव्याधिना ॥

कञ्चु ॥ उपसृत्य ॥ जयति जयति देवः, देव प्रत्यवेक्षिताः प्रमदवनभूमयः यथाकाममध्यास्तां विनोदस्थानानि देवः। (४५)

राजा ॥ वेत्रवति मद्वचनादमात्यपिशुनं ब्रूहि अद्य चिरप्रबोधान्न सम्भावितमस्माभिर्धर्म्मासनमध्यासितुम् यत्प्रत्यवेक्षितमार्य्येण पौरकार्य्यं तत्पत्रमारोप्य प्रस्थाप्यतामिति। (४६)

प्रती ॥ जं देवो आणवेदि। इति निष्क्रान्ता। (४७)

राजा ॥ पार्वतायन त्वमपि स्वनियोगमशून्यं कुरु। (४८)

कञ्चु ॥ यदाज्ञापयति देवः। इति निष्क्रान्तः। (४९)

---

(४५) कञ्चु इति। प्रत्यवेक्षिता सावहितमीक्षिताः। यथाकामं यथाभिलाषम्। अध्यास्तामुपविशतु। विनोदस्थानानि विरहयापनस्थानानि। अधिशीङ्स्थासेत्युपादानादधिकरणस्य कर्म्मत्वम्॥

(४६) राजेति। वेत्रवतीति प्रतीहार्य्याः सम्बोधनम्। मद्वचनात् राज्ञोच्यत इत्युक्त्वा इति तात्पर्य्यम्। अमात्यो मन्त्री स चासौ पिशुनस्तन्नामा चेत्यमात्यपिशुनस्तम्। मन्त्री धीसचिवोऽमात्य इत्यमरः। चिरप्रबोधादतिजागरणात्। धर्म्मासनं धर्म्माधिकरणगतविचारासनम्। तथाच मनुः। धर्म्मासनमधिष्ठाय संवीताङ्गः समाहितः। प्रणम्य लोकपालेभ्यः कार्य्यदर्शनमारभेदिति। प्रत्यवेक्षितं दृष्टम्। आर्य्येण भवता। पौरकार्य्यं पुरजनसम्बन्धकार्य्यं। राजकार्य्यव्यापारामात्यावेक्षणीयत्वं राजस्तु पौरकार्य्यावेक्षणमिति भावः। पत्रमारोप्य पत्रारूढं कृत्वा। प्रस्थाप्यतां प्रेष्यताम्। इति ब्रूहीत्यन्वयः। अत्र मनुः। अमात्यमुख्यं धर्म्मज्ञं प्राज्ञं दान्तं कुलोद्गतम्। स्थापयेदासने तस्मिन् खिन्नः कार्य्येक्षणे नृणामिति॥

(४७) प्रतीति। जमित्यादि। यद्देव आज्ञापयति। सुगमम्॥

(४८) राजेति। पार्वतायन कञ्चुकिन्। स्वनियोगं स्वाधिकारम्। अशून्यं शून्यं न कुरु। स्वाधिकारं गच्छेत्यर्थः॥

(४९) कञ्चु इति। सुगमम्॥

कञ्चु ॥ उपसृत्य ॥ जयति जयति देवः, देव प्रत्यवेक्षिताः प्रमदवनभूमयः यथाकाममध्यास्तां विनोदस्थानानि देवः। (४५)

राजा ॥ वेत्रवति मद्वचनादमात्यपिशुनं ब्रूहि अद्य चिरप्रबोधान्न सम्भावितमस्माभिर्धर्म्मासनमध्यासितुम् यत्प्रत्यवेक्षितमार्य्येण पौरकार्य्यं तत्पत्रमारोप्य प्रस्थाप्यतामिति। (४६)

प्रती ॥ जं देवो आणवेदि। इति निष्क्रान्ता। (४७)

राजा ॥ पार्व्वतायन त्वमपि स्वनियोगमशून्यं कुरु। (४८)

कञ्चु ॥ यदाज्ञापयति देवः। इति निष्क्रान्तः। (४९)

---

(४५) कञ्चु इति। प्रत्यवेक्षिताः सावहितमीक्षिताः। यथाकामं यथाभिलाषम्। अध्यास्तामधितिष्ठतु। विनोदस्थानानि विरहयापनस्थानानि। अधिशीङ्स्थासेत्युपादानादधिकरणस्य कर्म्मत्वम्॥

(४६) राजेति। वेत्रवतीति प्रतीहार्य्याः सम्बोधनम्। मद्वचनात् राज्ञोच्यत इत्युक्त्वा इति तात्पर्य्यम्। अमात्यो मन्त्री नाम्ना पिशुनस्तन्नामा चेत्यमात्यपिशुनस्तम्। मन्त्री धीसचिवोऽमात्य इत्यमरः। चिरप्रबोधात् अतिजागरणात्। धर्म्मासनं धर्म्माधिकरणगतविचारासनम्। तथाच मनुः। धर्म्मासनमधिष्ठाय संवीताङ्गः समाहितः। प्रणम्य लोकपालेभ्यः कार्य्यदर्शनमारभेदिति। प्रत्यवेक्षितं दृष्टम्। आर्य्येण भवता। पौरकार्य्यं पुरजनसम्बन्धं कर्म्म। राज्यकार्य्यममात्यावेक्षणीयत्वं राज्ञस्तु पौरकार्य्यावेक्षणमिति भावः। पत्रमारोप्य पत्रारूढं कृत्वा। प्रस्थाप्यतां प्रेष्यताम्। इति ब्रूहीत्यन्वयः। अत्र मनुः। अमात्यमुख्यं धर्म्मज्ञं प्राज्ञं दान्तं कुलोद्गतम्। स्थापयेदासने तस्मिन् खिन्नः कार्य्येक्षणे नृणामिति॥

(४७) प्रतीति। जमित्यादि। यद्देव आज्ञापयति। सुगमम्॥

(४८) राजेति। पार्व्वतायन कञ्चुकिन्। स्वनियोगं स्वाधिकारम्। अशून्यं कुरु शून्यं न कुरु। स्वाधिकारं गच्छेत्यर्थः॥

(४९) कञ्चु इति। सुगमम्॥

राजा ॥ ईदृशमेव हृदयाश्वासनं तत्तदेवादेशय माधवीलतामण्डपम् । (५७)

विदू ॥ इदो इदो एदु भवं । इत्युभौ परिक्रामतः । (५८)

मिश्रकेशी ॥ अनुगच्छामि । (५९)

विदू ॥ एसो मणिसिलापट्टसणाहो माहवीलदामण्डवो विवित्तदाए उवआररमणीअदाए णिस्संसअं साअदेण विअ पडिच्छदि तुमं ता पविसिअ णिसीददु भवं । (६०)

---

फलके मे स्वहस्तलिखितां तत्रभवत्याः शकुन्तलायाः प्रतिकृतिमानयेति । चतुरत्न-मत्रे । भवता मेधाविनी इत्यादिना सम्बोधय । व्याजपरिचारिका सततसन्नि-हितपरिचारिका । लिपिकरी लेखननिपुणा । मेधाविनी स्मृतिमती या न विस्म-रिष्यतीति भावः । आदेशयामि माधवीत्यादि । अतिवाहयिष्यामि यापयि-ष्यामि । तत्र त्वामवेक्षमाणेन सम्बन्धः । चित्रफलके चित्रार्थदारुमयपट्टके । स्वहस्त-लिखिता स्वहस्तचित्रिताम् । प्रतिकृतिं प्रतिमूर्त्तिम् ॥

(५७) राजेति । ईदृशमेव चित्रदर्शनादिकमेव हृदयाश्वासनं मनोभेदनि-वारणम् । यथायोग्यम् । वियोगावस्थासु प्रियजनसदृशानुभवनं तत्चित्रं कर्म समयक्षये दर्शनमपि । तदङ्गस्पृष्टानामवगततया स्पर्शनमपि प्रतीकारः काम-व्यथितमनसां कोऽपि गदित इति । आदेशय दर्शय ॥

(५८) विदू इति । इदो इत्यादि । इत इत एतु भवान् । सुगमम् ॥

(५९) मिश्रे ति । सुगमम् ॥

(६०) विदू इति । एसो इत्यादि । एष मणिशिलापट्टसनाथो माधवीलता-मण्डपो विविक्ततया उपकाररमणीयतया च निसर्गमारुतेन स्वागतेनेव प्रती-च्छति त्वां तत्प्रविश्य निषीदतु भवान् । मणीति । मणिभूता रत्नभूता या शिला तस्याः पट्ट पीठफलकनामकाष्ठयुक्तः । पट्ट पेषणपाषाणे व्रणादीनाञ्च बन्धने । कक्षान्तरेऽपि राजादिशासनान्तरपीठयोरिति मेदिनी । विविक्ततया विजनतया उपकारेण विकीर्णकुसुमादिना रमणीयतया मनोज्ञतया च । प्रकरणोप-

अनुशयादनुरोदिमि चोत्सुकः
सुरभिमाससुखं समुपैति च ॥ (५३)

विदू ॥ भो वअस्स चिट्ठ दाव जाव इमिणा दण्डकट्ठेण कन्दप्पवाणं णासेमि । इति दण्डकाष्ठमुद्यम्य चूताङ्कुरं ताड़यितुमिच्छति । (५४)

राजा ॥ सस्मितम् ॥ भवतु दृष्टं ब्रह्मवर्च्चसं सखे क्वेदानीमुपविष्टः प्रियायाः किञ्चिदनुकारिणीषु लतासु दृष्टिं विनोदयामि । (५५)

विदू ॥ णं भअदा आसण्णपरिचारिआ लिविअरी मेहाविणी आदिट्ठा माहवीलदाहरए इमं वेलं अदिवाहिस्सं तहिं चित्तफलए मे सहत्थलिहिदं तत्थभोदीए सउन्तलाए पडिकिदिं आणेहित्ति । (५६)

---

(५३) उपेति । अङ्गुलिमुद्रया आम्राङ्कुरावदर्शनेन । अङ्गुरीयकमङ्गुलिमुद्रा स्यादित्यमरः । उपहिता जनिता रतिः स्मरणं यस्य स तथोक्तोऽहम् उत्कण्ठोद्‌र्शनाभिलाषी अकारणनिराकृताकारणप्रत्याख्यातां प्रियतमां मनस्यारोप्य अनुशयात् दुःखतापात् रोदिमि क्रन्दामि सुरभिमासस्य वसन्तमासस्य सुखञ्च समुपैति उपगच्छति । वसन्ते पुष्पसमयः सुरभिरित्यमरः । प्रियाविप्रयोगदुःखावकाशमासाद्यैव वसन्तमासागम इति रुक्मोपमालिता । चकारद्वयं समस्तं पूर्ववत् ॥

(५४) विदू इति । भो इत्यादि । भो वयस्य तिष्ठ तावत् यावदनेन दण्डकाष्ठेन कन्दर्पबाणं नाशयामि । दण्डकाष्ठेन लगुडेन । कन्दर्पबाणं चूताङ्कुरं । ताडयितुमाहन्तुम् ॥

(५५) राजेति । ब्रह्मणो वेदाध्ययनस्य तदर्थपरिपालनस्य च वर्च्चस्तेजो ब्रह्मवर्च्चसम् । ब्रह्महस्तिराजपल्याद्वर्च्चस इत्यच्प्रत्ययः । वेदास्तत्त्वं तपो ब्रह्मेति । तेज पुरीषयोर्वर्च्च इति । स्याद्ब्रह्मवर्च्चसं वेदाध्ययनर्द्धिरिति चामर । क्व कुत्र । किञ्चिदनुकारिणीषु स्वल्पसादृश्यवतीषु । अतएवोक्तम् । वियोगावस्थासु प्रियजनसदृशानुभवनमिति । दृष्टिं विनोदयामि दृष्टिसुखमनुभवामि ॥

(५६) विदू इति । नन्वित्यादि । ननु भवता आसन्नपरिचारिका लिपिकरी मेधाविनी आदिष्टा माधवीलतामण्डपे इमां वेलामतिवाहयिष्यामि तत्र चित्र-

राजा ॥ ईदृशमेव हृदयाश्वासनं तत्तदेवादेशय माधवीलतागृहम् । (५७)

विदू ॥ इदो इदो एदु भवं । (उभौ परिक्रामतः ।) (५८)

मिश्रकेशी ॥ अनुगच्छामि । (५९)

विदू ॥ एसो मणिसिलापट्टसणाहो माहवीलदामण्डवो विवित्तदाए उवआररमणीअदाए णिसग्गमादरेण अ साअदेण विअ पडिच्छदि तुमं ता पविसिअ णिसीददु भवं । (६०)

---

फलके मे स्वहस्तलिखितां तत्रभवत्याः शकुन्तलायाः प्रतिकृतिमानयेति । चतुरत-प्रश्ने । भवता मेधाविनी इत्यादिना सन्दिष्टमस्य । आसनपरिचारिका सततमनिकटपरिचारिका । चित्रकरी लेखननिपुणा । मेधाविनी स्मृतिमती या न विस्मरिष्यतीति भाव । आदेशयाह माधवीत्यादि । अतिवाहयिष्यामि यापयिष्यामि । तत्रेत्यानयेत्यनेन सम्बन्धः । चित्रफलके चित्रार्थदारुमयपट्टके । स्वहस्तलिखितां स्वहस्तचित्रिताम् । प्रतिकृतिं प्रतिमूर्त्तिम् ॥

(५७) राजेति । ईदृशमेव चित्रदर्शनादिकमेव हृदयाश्वासनं मनोनिर्वृतिकारणम् । तथाचोक्तम् । वियोगावस्थासु प्रियजनसदृक्षानुभवनं ततश्चित्रं कर्म स्वप्नसमये दर्शनमपि । तदङ्गस्पृष्टानामुपगतवतां स्पर्शनमपि प्रतीकारः कामव्यथितमनसां कोऽपि गदित इति । आदेशय दर्शय ॥

(५८) विदू इति । इदो इत्यादि । इत इत एतु भवान् । सुगमम् ॥

(५९) मिश्रे ति । सुगमम् ॥

(६०) विदू इति । एसो इत्यादि । एष मणिशिलापट्टसनाथो माधवीलतामण्डपो विविक्ततया उपकाररमणीयतया च निसर्गस्वागतेन स्वागतेनेव प्रतीच्छति त्वां तत्प्रविश्य निषीदतु भवान् । मणीति । मणिभूता रत्नभूता या शिला तस्याः पट्ट पीठमासनायतदुपयुक्त । पट्ट पेषणपाषाणे व्रणादीनाञ्च बन्धने । कशान्तरेऽपि राजादिशासनान्तरपीठयोरिति मेदिनी । विविक्ततया विजनतया उपकारेण विकीर्णकुसुमादिना रमणीयतया मनोज्ञतया च । प्रकरणोप-

उभौ ॥ प्रविश्योपविष्टौ ॥ (६१)

मिश्र ॥ लदासंस्सिदा पेक्खिस्सं दाव पिअसहीए पडिकिदिं तदो से भत्तुणो बहुमदं अणुराअं णिवेदइस्सं। इति तथा कृत्वा स्थिता । (६२)

राजा ॥ निश्वस्य ॥ सखे सर्व्वमिदानीं स्मरामि शकुन्तलायाः प्रथमदर्शनवृत्तान्तं यं कथितवानस्मि भवते । स भवान् प्रत्यादेशसमये मत्समीपगतो नासीत् किन्तु पूर्व्वमपि न त्वया कदाचित् सङ्कीर्त्तितं तत्रभवत्या नामादिकं कच्चिदहमिव विस्मृतवानसि त्वमपि । (६३)

---

कारश्च विकीर्णकुसुमादिष्विति शेषः । स्वागतेन कुशलप्रश्नेनेव । स्वागतं कुशलप्रश्न इति हारावली । निसर्गभाक्तेन स्वाभाविकानिलेन मन्द वेशिनेत्यर्थः । कटयेन त्वां प्रतीच्छति रच्छाति । अत्र पवनस्य लतान्दवागतत्वेन शैत्यं विकीर्णकुसुमसम्पर्कात्सौगन्ध्यं निसर्गत्वाच्च मान्द्यं दर्शितम् । स्वागतेनेव निसर्गभाक्तेनेत्युत्प्रेक्षा ॥

(६१) उभाविति । सुगमम् ॥

(६२) मिश्रेति । लदेत्यादि । लतासंश्रिता प्रेक्षिष्ये तावत् प्रियसख्याः प्रतिकृतिं ततोऽस्याभर्त्तुर्बहुमतमनुरागं निवेदयिष्यामि । लतासंश्रिता लतामाश्रिता । प्रियसख्याः शकुन्तलायाः । ततस्तदनन्तरं भर्त्तुर्बहुमतं बहुमानयुक्तमनुरागमस्याः सम्यक् निवेदयिष्यामि । तथाकृत्वा लतामाश्रित्य ॥

(६३) राजेति । यं प्रथमदर्शनवृत्तान्तम् । कथितवानस्मि तदापि शेषेति शेषः । स भवान् श्रुतवृत्तान्तो भवान् । प्रत्यादेशसमये प्रत्याख्यानसमये । पूर्व्वमपि शकुन्तलाया आगमनात् पूर्व्वमपि । सङ्कीर्त्तितमुल्लिखितम् । कच्चित् किम् । कच्चित् कामप्रवेदन इत्यमरः । कामप्रवेदनमभिलषितप्रश्नः । तथा चानतिचिरेणैवातिविस्मरणादात्मनोऽल्पमतित्वदोषतिरोधानाय माधव्यस्यापि विस्मरणमिष्टमस्येति भावः ॥

मिश्र ॥ अदो ज्जेव महीवदिहिं पढमम्मि बहुमआओ सत्ताओ ण विरहिदव्वाओ । (६४)

विदू ॥ ण विसुमरामि किन्तु सव्वं कहिअ अवसाणे उण तुए भणिदं परिहासविअप्पिओ एसो ण भूदत्थोत्ति मएवि मन्दबुद्धिणा तथा ज्जेव गहिदं अथवा भविदव्वदा क्खु एत्थ बलवदी । (६५)

मिश्र ॥ एवखेदं । (६६)

राजा ॥ सर्वं ध्यात्वा ॥ सखे परित्रायस्व माम् । (६७)

विदू ॥ भो वअस्स किं एदं तुह उववण्णं ण कदावि सप्पुरिसा सोअचित्ता होन्ति णं पवादेवि णिक्कम्पा ज्जेव गिरिओ । (६८)

---

(६४) मिश्रेति । अदो इत्यादि । अतएव महीपतिभिः प्रथममपि बहुदयाः सत्ताया न विरहितव्याः । बहुदया बहुमताः । विरहितव्या त्यक्तव्याः । रहत्क तु त्याग इति कविकल्पद्रुमः ॥

(६५) विदू इति । णेत्यादि । न विस्मरामि । किन्तु सर्वं कथयित्वा अवसाने पुनस्त्वया भणितं परिहासविकल्पित एष न भूतार्थ इति । मयापि मन्दबुद्धिना तथैव गृहीतम् अथवा भवितव्यता अत्र बलवती । अर्थं शकुन्तलावृत्तान्तम् । एष वृत्तान्त अवसाने परिशेषे भूतार्थं सत्यार्थं । युक्तो यथादाहृते भूतं प्राप्यनीते सभे लिङ्गियमर । तथैव परिहासानिश्चिततयैव । गृहीतं ज्ञातम् । भविष्यतीति भवितव्यम् । तद्वतोः भावे इयुक्ते कर्त्तरि तव्य । तद्भावो भवितव्यता अवश्यम्भावितेत्यर्थः ॥

(६६) मिश्रेति । एवखेदं एवमिदम् ॥

(६७) राजेति । ध्यात्वा चिन्तयित्वा । परित्रायस्व रक्ष ॥

(६८) विदू इति । भोइत्यादि । भो वयस्य किमेतत् तवोपपन्नं न कदापि सत्पुरुषाः शोकचित्ता भवन्ति । ननु प्रवातेपि निष्कम्पाएव गिरयः । एतद् विरहव्यथाविक्लवत्वं किं तव सम्यक्त्वे उपपन्नं युक्तम् । शोक इष्टवियोगदुःख

राजा ॥ वयस्य निराकरणविक्लवायास्ते सख्यास्तामवस्थामनुस्मृत्य बलवदशरणोऽस्मि । सा हि (६९)

इतः प्रत्यादिष्टा स्वजनमनुगन्तुं व्यवसिता
स्थिता तिष्ठेत्युच्चैर्वदति गुरुशिष्ये गुरुसमे ।
पुनर्दृष्टिं बाष्पप्रकरकलुषामर्पितवती
मयि क्रूरे यत्तत् सविषमिव शल्यं दहति माम् ॥ (७०)

मिश्र ॥ अम्महे ईदिसी परवसदा इमस्स मम्पि सन्दावेदि । (७१)

विदू ॥ भो अत्थि मे तक्को केण उण तत्तभोदी आआससञ्चारिणा णीदेत्ति । (७२)

---

चित्तं येषां ते शोकचित्ताः । ननु यत । प्रवातेपि प्रबलमारुतेपि सति । गिरय पर्व्वता निष्कम्पाएव तदवस्थाएव ॥

(६९) राजेति । निराकरणेन प्रत्याख्यानेन विक्लवाया विह्वलायास्ते सख्याः शकुन्तलायास्तामवस्थां दुरवस्थां अनुस्मृत्य स्मृत्वा बलवदतिशयेन अशरणोऽरक्षितोऽस्मि । हि यस्मात् । सा शकुन्तला ॥

(७०) इत इति । इतो मत्सकाशात् प्रत्यादिष्टा निराकृता सती स्वजनं शार्ङ्गरवादिकमनुगन्तुं व्यवसिता कृताध्यवसाया सती गुरुसमे गुरुकल्पनीये गुरोः कण्वस्य शिष्ये शार्ङ्गरवे तिष्ठेत्युच्चैर्वदति सति स्थिता निवृत्तगमना सा शकुन्तला क्रूरे निष्ठुरे मयि बाष्पप्रकरेणाश्रुसमूहेन कलुषामनच्छाम् । बाष्पो नेत्रजलोष्मणोरिति विश्वः । प्रकरस्तु पुमान् वृन्दे विकीर्णकुसुमादिष्विति मेदिनी । दृष्टिं यत् पुनरर्पितवती दत्तवती तत् सविषं विषाक्तं शल्यं येन इति सविषशल्यमिव मां दहति ज्वालां नयति । इदं शिखरिणी नाम वृत्तम् ॥

(७१) मिश्रेति । अम्महे इत्यादि । अहो ईदृशी परवशता अस्य मामपि सन्तापयति । परवशता शकुन्तलायत्तचित्तता ॥

(७२) विदू इति । भो इत्यादि । भो अस्ति मे तर्कः केन पुनस्तत्रभवती

राजा ॥ वयस्य कः पतिव्रतां तामन्यः परामष्टुमुत्सहते मेनका किल सख्यास्ते जन्मप्रतिष्ठेति तत्सखीजनादस्मि श्रुतवान् तत्सहचरीभिस्तया वा नीतेति हृदयमाशङ्कते। (७३)

मिश्र ॥ सम्मोहेवि विह्मअणीओ क्खु दिँसअस्स पडिबोधो। (७४)

विदू। भो जइ एव्वं ता समस्सस भवं अत्थि क्खु समागमो कालेण तत्थभोदीए। (७५)

राजा ॥ कथं मिव। (७६)

विदू ॥ ण क्खु मादापिदरा भत्तिविओअदुक्खिदं दुहिदरं चिरं पेक्खिदुं पारेन्ति। (७७)

---

आकाशसञ्चारिण्या नीतेति। आकाशसञ्चारिणेति। सोमरातेन ज्योति-पदाभिधेयखेचरजन्तुस्वरूपस्याभिहितत्वात्तद्गमोऽस्येव इदानीं केन नीतेति प्रश्नः। इतीति तर्कोऽस्तीति सम्बन्धः ॥

(७३) राजेति। पतिव्रतां साध्वीम्। परामष्टुं स्प्रष्टुम्। उत्सहते अध्यवस्यति। जन्मप्रतिष्ठा जन्मस्थानम्। प्रभवितोऽयथ। प्रतिष्ठा गौरवस्थितौ। स्थाने च याग-निष्पत्ताविति मेदिनी। तत्सखीमुखात् शकुन्तलासखीमुखात्। तत्सहचरीभिः मेनका-सखीभिः। तया मेनकया। तयाऽऽहृतेति पाठः क्वचिद् दृश्यते। नीता स्वस्थानं प्रापिता ॥

(७४) मिश्रेति। सम्मोहेवीत्यादि। सम्मोहेऽपि विस्मयनीयः खलु अस्य प्रतिबोधः। सम्मोहेऽपि प्रियावियोगशोकेऽपि। विस्मयनीयो विस्मयजनकः। प्रतिबोधोऽनुभवः ॥

(७५) विदू इति। भो इत्यादि। यद्येवं तत् समाश्वसितु भवान् अस्ति खलु समागमः कालेन तत्रभवत्या। एवं यदि मेनकया तत् सख्या वा अपहृतेत्। समाश्वसितु आश्वासं गच्छतु। खलु यस्मात्। समागमः संयोगसम्भवः ॥

(७६) राजेति। सुगमम् ॥

(७७) विदू इति। णेत्यादि। न खलु मातापितरौ भर्तृवियोगदुःखितां दुहितरं अचिरं प्रेक्षितुं पारयतः। माता च पिता च तौ मातापितरौ। ऋतोऽत्र तत्र द्वन्द्वेति। मातापितरावित्यर्थः। चिरं दीर्घकालं। पारयतः शक्नुतः ॥

राजा ॥ अङ्गुरीयकं विलोक्य ॥ अये इदं तदसुलभस्थानभ्रंशि शोचनीयम् । (८१)

तव सुचरित मङ्गुरीय नूनं प्रतनु ममेव विभाव्यते फलेन ।
अरुणनखमनोहरासु तस्याश्च्युतमसि लब्धपदं यदङ्गुलीषु ॥ (८२)

मिश्र ॥ जइ अण्णहत्थगदं भवे तदो सच्चं सोअणीअं भवे सहि दूरे वट्टसि एआइणी ज्जेव कण्णसुहाइं अणुभवेमि । (८३)

विदू ॥ भो इयं णाममुद्दा केण उद्देसेण भवदा तत्भोदीए हत्थसंसग्गं पाविदा । (८४)

मिश्र ॥ ममवि कोदूहलेण वाआरिदो एसो । (८५)

---

मिति भावः । अवस्थानभिमन्त्रीत्यवस्थाभाविनो अर्थाः अचिन्तनीयोऽनिर्वचनीयः समागम आगमो येषां ते तथोक्ता भवन्ति ॥

(८१) राजेति । अये इति स्मरणे । अये क्रोधे विषादे च सम्भ्रमे स्मरणेऽपि चेति मेदिनी । असुलभं दुर्लभं यत् स्थानं प्रियाया अङ्गुलिरूपं तस्मात् भ्रंशि पतितमतएव शोचनीयं दुःखानुभवार्हं तदङ्गुरीयकमिदम् । अङ्गुरीयपदेनैव तस्य स्मरणात् ॥

(८२) तवेति । हे अङ्गुरीय तव सुचरितं सुकृतं ममेवानेन फलेन नूनं निश्चितं प्रतनु अल्पकं विभाव्यते निर्णीयते । यत् यस्मात् तस्याः प्रियायाः अरुणैर्लोहितैर्नखैर्मनोहरासु अङ्गुलिषु लब्धं पदं स्थानं येन तत् तथोक्तं सत् च्युतं भ्रष्टमसि । सुचरितातिरेकेण तु चिरस्थितिरनपभ्रंशकाङ्गुलीयाऽभविष्यदिति भावः । इदं पुष्पिताग्रा नाम वृत्तम् । तदुक्तम् । अयुजि न युगरेफतो यकारो युजि तु नजौ जरगाश्च पुष्पिताग्रा इति ॥

(८३) मिश्रेति । जइ इत्यादि । यद्यन्यहस्तगतं भवेत् तदा सत्यं शोचनीयं भवेत् । सखि दूरे वर्त्तसे एकाकिन्येव कर्णसुखान्यनुभवामि । अन्यहस्तगतं महाराजेतरस्य हस्तगतम् । दम्पत्योः सुखदायकत्वादिति भावः । शकुन्तलासखित्वाच्च मयेति । न त्वं श्रोतव्यं शृणोषीति भावः ॥

(८४) विदू इति । भो इत्यादि । भो इयं नाममुद्रा केनोद्देशेन भवता तत्रभवत्या हस्तसंसर्गं प्रापिता । नाममुद्रा नाम्नाक्षराङ्गुरीयम् । उद्देशेनाभिसन्धिना ॥

(८५) मिश्रेति । ममेत्यादि । ममापि कौतूहलेन व्यापारित एषः । अपिः प्रश्ने । किं मम कौतूहलेन अनपेक्षया एष राजर्षिः व्यापारितः वचनव्यापारं कारितः । आत्म-

राजा ॥ वयस्य श्रूयताम् । तदा स्वनगराय तपोवनात् प्रस्थितं मां प्रिया सवाष्पमाह स्म कियच्चिरेणार्य्यपुत्त्रः पुनरस्माकं स्मरिष्यतीति । (८६)

विदू ॥ तदो-तदो । (८७)

राजा ॥ अथैनां मुद्रामङ्गुल्यां निवेशयता मया प्रत्यभिहिता । (८८)

विदू ॥ किं त्ति । (८९)

राजा ॥

एकैकमत्र दिवसे दिवसे मदीयं
नामाक्षरं गणय गच्छसि यावदन्तम् ।
तावत् प्रिये मदवरोधनिदेशवर्त्ती
नेता जनस्तव समीपमुपैष्यतीति ॥ (९०)

---

जन्या भवदिच्छा इच्छाजन्या रतिर्भवदित्यनेनात्मजन्याया इच्छाया नरम्यापारजन्यायाः रतेश्च सामानाधिकरण्येनैव कार्य्यकारणभावस्य प्रतिपादितत्वात् तयोर्वैयधिकरण्यप्रदर्शनेनात्रासङ्गत्या अलङ्क्रियते । यदुक्तं दर्पणे कार्य्यकारणयोर्भिन्नदेशतायामसङ्गतिरिति ॥

(८६) राजेति । तदा परिणयात् परम् । स्वनगराय हस्तिनापुराय । गत्यर्थमन्येत्यनेन चतुर्थी । सवाष्पं साश्रु । कियच्चिरेण कियद्विलम्बेन । अस्माकमिति स्मरत्यर्थकर्म्मणि षष्ठी ॥

(८७) विदू इति । तदो तदो ततस्ततः ॥

(८८) राजेति । अथ तस्या वचनानन्तरम् । मुद्रा नामाङ्गुरीयम् । निवेशयता प्रवेशयता प्रत्यभिहिता प्रत्युक्ता ॥

(८९) विदू इति । किं त्ति किमिति । किमभिहितेत्यर्थः ॥

(९०) राजेति । एकैकमिति । हे प्रिये अत्र आश्रमे दिवसे दिवसे प्रतिदिनं मदीयमेकैकमेकमेकं नामाक्षरं अङ्गुरीयगतमिति शेषः । गणय यावत् यदा अन्तं चरमाक्षरं गच्छसि गणनया प्राप्स्यसि । यावत्पुराभ्या भव्ये इति भविष्यति लट् । तावत् तदा मदवरोधस्य ममान्तःपुरस्य निदेशे आज्ञायां वर्त्तते सः निदेशवर्त्ती भत्यो जनः कञ्-

तच्च दारुणात्मना मया मोहान्नानुष्ठितम् । (८१)

मिश्र ॥ रमणीओ क्खु अवही विहिणा विसंवादिदो । (८२)

विदू ॥ भो कधं लोहिदमच्छस्स वडिसं विअ मुहप्पविट्टं एदं आसी । (८३)

राजा ॥ शचीतीर्थे सलिलं वन्दमानायास्ते सख्या हस्ताद्गङ्गास्रोतसि परिभ्रष्टम् । (८४)

विदू ॥ जुज्जदि । (८५)

मिश्र ॥ अदो क्खु तवस्सिणीए सउन्तलाए अधम्मभीरुणो इमस्स राएसिणो परिणए सन्देहो जादो अधवा ण ईदिसो अणुराओ अहिण्णाणं अवेक्खदि ता कधंविअ एदं । (८६)

---

णोति यावत् । नेता त्वामन्तःपुरं प्रापयिष्यन् तव समीपमुपैष्यति आगमिष्यति । नेतेति भविष्यति तृण् । इति मय्यभिहितेति सम्बन्धः । वसन्ततिलकं नाम वृत्तम् ॥

(८१) तच्चेति । दारुणो भीषण आत्मा यस्य स तेन मया मोहात् भ्रमात् तत् आनयनं नानुष्ठितम् न कृतम् ॥

(८२) मिश्रेति । रमणीओ इत्यादि । रमणीयः खल्ववधिर्विधिना विसंवादितः । अवधिरन्तःपुरानयनकालसीमा । विसंवादितो विप्रलब्धः वञ्चित इति यावत् । विप्रलम्भो विसंवाद इत्यमरः ॥

(८३) विदू इति । भो इत्यादि । भोः कथं रोहितमत्स्यस्य बडिशमिव मुखप्रविष्टमेतदासीत् । बडिशं मत्स्यवेधनमित्यमरः । एतदङ्गुरीयकम् ॥

(८४) राजेति । शचीतीर्थे गङ्गावतारस्य शचीघट्टे । वन्दमानायाः स्तवपूर्वकं नमन्त्या ॥

(८५) विदू इति । जुज्जदि युज्यते ॥

(८६) मिश्रेति । अदो इत्यादि । अतः खलु तपस्विन्याः शकुन्तलाया अधर्मभीरोरस्य राजर्षेः परिणये सन्देहो जातः । अथवा नेदृशोऽनुरागोऽभिज्ञानमपेक्षते तत्कथ-

राजा ॥ उपालप्स्ये तावदिदमङ्गुरीयकम् । (९७)

विदू ॥ स्वगतम् ॥ भो अहम्मि दाव एद दण्डकट्ठं उवालम्भिस्सं कधं उज्जुअस्स मे कुडिलं तुमं सित्ति । (९८)

राजा ॥ अदृष्टश्रुत्वेव । (९९)

कथं नु तं कोमलबन्धुराङ्गुलिं
करं विहायासि निमग्नमम्भसि । (१००)

अथवा । (१०१)

---

निवेतत् । अत खलु अभिज्ञानभूताया अङ्गुलिमुद्राया विरहादेव । तपस्विन्या अनु-कम्पार्हाया शकुन्तलाया परिणये उपयमविषये अधर्माद्भीरोः भयशीलस्य अस्य राजर्षेः सन्देहोजात । एतदनुमानस्यायुक्तत्वमनुभूयाह अथवेति । दैवम् इदानीं दृश्यमान । प्रागप्येवमेवासीदिति भाव । अभिज्ञान स्मृतिहेतुम । अपेक्षते स्मारयितुमिति शेषः । तत् तस्मात् एतत् विस्मरण केयमिव कीदृशम् । अनधिकारप्रश्न ॥

(९७) राजेति । उपालप्स्ये निन्दिष्यामि । तावत् तस्मादित्यर्थ ॥

(९८) विदू इति । भो इत्यादि । भो अहमपि तावदेतद्दण्डकाष्ठमुपालप्स्ये कथ-मृजुकस्य मे कुटिल त्वमसीति । तावत तदा । ऋजुकस्य सरलस्य । मे मम सम्बन्धे । कुटिल वक्रम । इति उपालप्स्ये इत्यन्वितम् ॥

(९९) राजेति । तद्विदूषकवाक्यम् । एवकार प्रतिवचन सुदूरं निरस्यति ॥

(१००) कथमिति । नु भो कथ कोमला सुकुमारा बन्धुरा उन्नतानता न चिपिटा इत्यर्थ । अङ्गुलयो यस्य स तम । बन्धुरन्नूतनानतमित्यमर । तदुक्तं सामुद्रके । दीर्घाङ्गुलीभिः कुब्जा कृशाभिरतिनिर्धना । सुस्त्राभि स्त्राव सुखायुर्भिन्नाभिस्मन्-पस्विनी । चिपिटाभिभवस्त्रासौ विरलाभिर्दरिद्रिणीति । तथा । सुस्त्रादर्थं सुगात्रीणां बहुभोगाय जायते । सद्ध अधोभर्ग रक्त तत पाण्योरस्त्युकमिति । त करं प्रियाया पाणिं विहाय त्यक्त्वा अम्भसि सलिले निमग्न पतितमसि ॥

(१०१) मन्दोऽस्मिन् सदमेदोसरमभिमेत्याह अथवेति ॥

अचेतनं नाम गुणं न वीक्षते
मयैव कस्मादवधीरिता प्रिया ॥ (१०२)

मिश्र ॥ सअं ज्जेव पडिवण्णो जं अह्मि वत्तुकामा । (१०३)

विदू ॥ भो सव्वधा अहं बुभुक्खाए मारिदव्वो । (१०४)

राजा ॥ अनादृत्य ॥ प्रिये अकारणपरित्यागादनुशयदग्धहृदय-स्तावदनुकम्प्यतामयं जनः पुनर्दर्शनेन । (१०५)

प्रविश्य चित्रफलकहस्ता चटी ॥ भट्टा इअं चित्तगदा भट्टिणी ।
इति चित्रफलकं दर्शयति । (१०६)

---

(१०२) अचेतनमसारमाह अचेतनमित्यादि द्वितीयार्धेन । नाम सम्भाव्ये । अचेतनं चेतनारहितं वस्तु गुणं पदार्थविशेषमाधुर्यं न वीक्षते नालोकयति । अन्यथा लोकेषु मध्ये मयैव कस्माद्धेतोः प्रिया प्रीतिकरी रमणी अवधीरिता प्रत्याख्याता । नान्येन केनापि तथाविधा प्रत्याख्यायत इति भावः । एतेनात्मनोऽप्यचेतनत्वं दर्शितम् । वंशस्थविलं वृत्तम् ॥

(१०३) मिश्रेति । सअमित्यादि । स्वयमेव प्रतिपन्नो यदस्मि वक्तुकामा । अयं यदहं कथा प्रतिविवक्षुरस्मि तत् नाचेतनस्य गुणदर्शित्वमितोऽन्यथ । स्वयमेव प्रतिपन्नो अवगतवान् क्षितिपतिरिति शेषः । प्रदेशान्तरं गतुमसमर्थत्वादप्येषाऽपि गत्यभावेति अप्रसरितः ॥

(१०४) विदू इति । भो इत्यादि । भो सर्वथाहं बुभुक्षया मारयितव्यः । सर्वथा यावत् । सर्वथा हेतुसाकल्ययोरिति मेदिनी । भोक्तुमिच्छा बुभुक्षा तया क्षुधया कर्त्र्या मारयितव्यो विनाशयितव्यः ॥

(१०५) राजेति । अनादृत्य विदूषकवाक्यं श्रुतमश्रुतं कृत्वा । अनुशयेति । अनुशये-नानुतापेन दग्धं हृदयं मनो यस्य सः ॥

(१०६) प्रविश्येति । चित्रफलकहस्ता चित्रपटहस्ता । भट्टेति । भर्त्तरियं चित्रगता भट्टिनी । चित्रगता चित्रस्था । भट्टिनी अकृताभिषेका-न्ते पत्नी । देवी कृताभिषेकायां भित्तरासु च भट्टिनी इत्यमरः ॥

राजा ॥ विलोक्य ॥ अहो रूपमालेख्यगतायामपि प्रियायाः । तथाहि (१०७)

दीर्घापाङ्गविसारिनेत्रयुगलं लीलाञ्चितभ्रूलतं
दन्तान्तःपरिकीर्णहासकिरणज्योत्स्नाविलिप्ताधरम् ।
कर्कन्धुद्युतिपाटलोष्ठरुचिरं तस्यास्तदेतन्मुखं
चित्रेऽप्यालपतीव विभ्रमलसत्प्रोद्भिन्नकान्तिद्रवम् ॥ (१०८)

विदू ॥ विलोक्य ॥ साहु वअस्स साहु जं तए महुरो भङ्गिणीए दंसिदो भावाणुप्पवेसो खलदि विअ मे दिट्ठी णिण्णुण्णदेसेसु किं बहुणा सत्ताणुप्पवेससङ्काए आलवणकोदूहलं मे जणअदि । (१०९)

---

(१०७) राजेति । आलेख्यगताया चित्रगताया अपि प्रियाया रूपं अहो आश्चर्यं । रूपोत्कर्षं दर्शयितुमाह तथाहीति ॥

(१०८) दीर्घेति । दीर्घेणाकर्णगामिना अपाङ्गेन नेत्रयोरन्तेन विसारि प्रसारि विलासवदिति यावत् नेत्रयुगलं यत्र तत् तथा । विस्तृमरो विसृमरः प्रसारी च विसारिण्योऽप्यमरः । लीलया विलासेन अञ्चिता वक्रीकृता भ्रूलता यत्र तत् तथोक्तम् । दन्तान्तर्दन्तमध्ये परिकीर्णो व्याप्तो यो हासकिरणः हासजनितधवलिमा तदात्मकज्योत्स्नया विलिप्तो अधरो यस्मिन् तत् । कर्कन्धुद्युतिरिव बदरीफलकान्तिरिव पाटलः श्वेतरक्तो य ओष्ठस्तेन रुचिरं मनोज्ञम् । बिम्बोष्ठीतिवत् कर्कन्धुमत्रोपि पक्वं फलमभिधत्ते । श्वेतरक्तस्तु पाटल इत्यमरः । विभ्रमेण शृङ्गारभावविकारविशेषेण शोभया वा लसति क्रीडतीति विभ्रमलसत् । विभ्रमः शृङ्गारभावजातक्रियाविशेषके । भ्रान्तावपि च शोभायामिति मन्दारिः । लसविलि क्रीडे इति कविकल्पद्रुमः । प्रोद्भिन्ना कान्तिर्लावण्यं येन स प्रोद्भिन्नकान्तिः । लावण्यप्रवृद्धिया जातद्रवत्वः । तथाभूतोद्भवः स्वेदबिन्दुर्यत्र तत् तथाभूतं तस्याः शकुन्तलाया एतद्दृश्यमानं तत् प्रागनुभूतं मुखं चित्रेऽपि आलेख्यगतमपि आलपति आभाषत इव । स्यादाभाषणमालाप इत्यमरः । शार्दूलविक्रीडितं वृत्तम् ॥

(१०९) विदू इति । विलोक्य चित्रपटमिति शेषः । साहु इत्यादि । साधु वयस्य साधु यत्त्वया मधुरो भङ्गिन्या दर्शितो भावानुप्रवेशः स्खलतीव मे दृष्टिर्निम्नोन्नतप्रदेशेषु कि

मिश्र॥ अह्मो एषा राएसिणो वट्टिआलेहणिउणदा जाणे पिअसही मे अग्गदो वट्टदित्ति। (११०)

राजा॥

यद्यत् साधु न चित्रे स्यात् क्रियते तत्तदन्यथा।
तथापि तस्या लावण्यं लेखया किञ्चिदन्वितम्॥ (१११)

तथाहि। (११२)

अस्यास्तुङ्गमिव स्तनद्वयमिदं निम्नेव नाभिः स्थिता
दृश्यन्ते विषमोन्नताश्च वलयो भित्तौ समायामपि।

---

मञ्जुना सत्यानुप्रवेशमञ्जुषया आलपनकौतूहलं मे जनयति। साधुत्वे हेतुमाह यदित्यादि। अङ्गिन्याः शकुन्तलायाः। मधुरो लोकप्रियः। स्वादुप्रियौ तु मधुराविन्यमरः। भावानुप्रवेशो भावसम्बन्धः। दर्शितविनयेवेति शेषः। निम्नतमप्रदेशेषु गुह्यभागेषु स्तनादिष्वित्यर्थः। मे मम दृष्टिः स्खलति वाततविकलत्वात्रा न पततीत्यर्थः। सत्यानुप्रवेशमञ्जुषया प्राणसम्बन्धमञ्जुषया। 'द्रव्यासु व्यवसायेषु सत्त्वमस्त्री तु जन्तुष्वित्यमरः। आलपनकौतूहलम् आलापप्रवर्त्तनाम्॥

(११०) मिश्रेति। अह्मो इत्यादि। अहो राजर्षेर्वर्त्तिकालेखानिपुणता जाने प्रियसखी मे अग्रतो वर्त्तत इति। राजर्षेर्दुष्मन्तस्य वर्त्तिकाभिर्वर्णवर्त्तिभिर्लेखायां चित्रणायां निपुणता कौशलं अहो आश्चर्यम्। जाने मन्ये किमित्याकाङ्क्षायामित्यन्वयेनेति॥

(१११) राजेति। यद्यदिति। यद्यद्रूपं चित्रे साधु अविकलं न स्यात् तत्तदन्यथा अन्यविधं क्रियते सर्वैरिति शेषः। तथापि तथाव्यवहारस्य चित्रनिपुणानां सर्वेषां स्वभावसिद्धत्वेऽपि तस्याः शकुन्तलायाः किञ्चित् किमपि लावण्यं अङ्गानां छविविशेषरूपं लेखया वर्णविशेषरेखया अन्वितं सम्बद्धम्॥

(११२) तथाहीति। हि यस्मात्तथारेखायोगात् सममेव भित्ति श्लोकीयचरणद्वयोः क्रमेणान्वयः। तृतीयचतुर्थचरणयोः रूपान्तरप्रदर्शनाय हेत्वन्तरनिर्देशात्॥

विदू ॥ भो तिस्सिआ आइदिओ दीसन्ति सव्वाओ ज्जेव दंसणीआओ ता कदमा एत्थ तत्तभोदी सउन्तला । (११७)

मिश्र ॥ अणहिण्णो क्खु एसो सहीए रूवस्स मोहचक्खु इअं क्खु णं से गदा पच्चक्खदं । (११८)

राजा ॥ त्वं तावत् कतमां तर्कयसि । (११९)

विदू ॥ निर्वर्ण्य ॥ तक्केमि जा एसा सिढिलबन्धणुव्वन्तकुसुमेण केसहत्थेण बद्धसेअविन्दुणा वअणेण विसेसदो णमिदंसआहिं बाहुलदाहिं उच्छुलिदणीविणा वसणेण अ ईसीपरिस्सन्ता विअ अहि-सेअसिणिद्धपल्लवस्स बालचूअरुक्खस्स पासे आलिहिदा एसा तत्तभोदी सउन्तला इदराओ सहीओत्ति । (१२०)

---

सदृश दर्शिता। अर्थान्तरन्यासेन किञ्चित्तत्सदृशं फलम्। तदथवा निदर्शित यदि सा स्यान्निदर्शनेति। अलम्भवत्। असत् असम्भवत्। वसन्ततिलकं नाम वृत्तम् ॥

(११७) विदू इति। भो इत्यादि। भोः स्त्रिय आलेख्यगता दृश्यन्ते सर्व्वा एव दर्शनीयास्तत्कतमात्र तत्रभवती शकुन्तला। दर्शनीया अवश्यमीक्षणीया रूपवत्य इत्यर्थः। कतमा आसां मध्ये का। किं यत्तदेकाभ्यामिति बहूनामेकनिर्धारणे डतमः ॥

(११८) मिश्रेति। अथेति। अनभिज्ञः खल्वेष सख्या रूपस्य मोघचक्षुः इदं खलु नास्य गता प्रत्यक्षताम्। अनभिज्ञ इदन्तयाननुभवात्। मोघं निरर्थकं चक्षुर्यस्य स मोघचक्षुः। मोघं निरर्थकमित्यमरः। उक्तरूप खलु प्रश्नार्थः। किमियमस्य प्रत्यक्षतां न गता इत्यर्थः ॥

(११९) राजेति। कतमामासां मध्ये काम्।

(१२०) विदू इति। निर्वर्ण्य निरीक्ष्य। निर्वर्णनन्तु निध्यानं दर्शनालोकनेक्षणमित्यमरः। तर्क्कोमीत्यादि। तर्कयामि यैषा शिथिलबन्धनोद्वान्तकुसुमेन केशहस्तेन बद्धस्वेदबिन्दुना वदनेन विशेषतो नमितांसकाभ्यां बाहुलताभ्याम् उच्छ्वसितनीविना वसनेन च ईषत् परिश्रान्तेव अभिषेकस्निग्धपल्लवस्य बालचूतवृक्षस्य पार्श्वे आलिखिता एषा तत्रभवती शकुन्तला। इतरे सख्याविति। शिथिलबन्धनेन बन्धनशैथिल्येन उद्वान्तानि मुक्तानि कुसुमानि येन स तेन केशहस्तेन केशकलापेन विशिष्टा। कमनीया विशेषणे। पक्षमप्यत्रापि।

अङ्गे च प्रतिभाति मार्दवमिदं स्निग्धप्रभावाच्चिरं
प्रेम्णा मन्मुखमीषदीक्षत इव स्मेरा च वक्तीव माम् ॥ (११३)

मिश्र ॥ सरिसं एव्वं पच्छादावगुरुणो सिणेहस्स । (११४)

राजा निःश्वस्य । (११५)

साक्षात् प्रियामुपगतामपहाय पूर्वं
चित्रार्पितामहमिमां बहुमन्यमानः ।
स्रोतोवहां पथि निकामजलामतीत्य
जातः सखे प्रणयवान् मृगतृष्णिकायाम् ॥ (११६)

---

(११३) अस्या इति। समायामनुन्नतायामपि भित्तौ फलके। उन्नतनिम्नत्वव्यक्ति-मिदम्। अस्याः शकुन्तलायाः इदं स्तनद्वयं तुङ्गमिव उन्नतदेशस्थमाभाति। उन्नताभ्यु-न्नतोदग्रोच्छ्रिता तुङ्गे इत्यमरः। नाभिनिम्ना गभीरेव स्थिता। तथा पत्रचर्यप्रभृ-तरङ्गेण विषमोन्नता नोन्नता इत्यन्ते भाव्यन्ते। रेखोपदर्शितविशेषरूपं निर्दिश्य इदानीं हेमवर्णजनितविशेषरूपं दर्शयति अङ्गे चेत्यादिना। चकारः स्निग्धप्रभावादित्यनेन योजनीयः। तथाच स्निग्धस्य तैलाक्तवर्णस्य प्रभावात् घृतेन हेम्नो रञ्जिते गात्रे। अङ्गे गात्रे मनोज्ञोपादानेऽपीति भाविनो। इदं दृश्यमानं मार्दवं कोमलता चिरं स्थायिभावेन प्रतिभाति प्रकाशते तथा प्रेम्णा प्रणयेन मन्मुखं ईषदल्पमीक्षते पश्यतीव नयनतारकयोः स्निग्धयोगादिति भावः। एवं स्मेरा मन्दहास्या सती मां प्रति किमपि व्याहरतीव च ओष्ठयोः स्पन्दादिति भावः। शार्दूलविक्रीडितं वृत्तम्॥

(११४) मिश्रेति। सरिसमित्यादि। सदृशमेवं पश्चात्तापगुरोः स्नेहस्य। एवं चित्र-गताया अपि बहुमानम्। पश्चात्तापेन गुरोः महतः स्नेहस्य प्रेम्णः सदृशम्॥

(११५) राजेति। निःश्वस्य दीर्घमिति शेषः॥

(११६) साक्षादिति। उपगतामुपस्थितां साक्षात्प्रत्यक्षेण प्रियां पूर्वं प्रत्यपहाय त्यक्त्वा चित्रार्पितामालिखितामिमां बहुमन्यमानः आद्रियमाणोऽहं पथि निकाम-जलां पर्याप्तजलां स्रोतोवहां नदीमतीत्य अतिक्रम्य मृगतृष्णिकायां मरीचिकायां मरीचिराशौ जलाभासमानायामिति भावः। प्रणयवान् जलार्थी जातः। मृगतृष्णा मरीचिका इत्य-मरः। अत्र पूर्वार्द्धस्य परार्द्धेनोपमानेन बिम्बप्रतिबिम्बभावाद्विदर्शनालङ्कारः।

विदू ॥ भो तिरिक्खा आइदिओ दीसन्ति सव्वाओ ज्जेव दंसणी-आओ ता कदमा एत्थ तत्थभोदी सउन्तला । (११७)

मिश्र ॥ अणहिओ क्खु एसो सहीए रूवस्स मोहचक्खु इअं क्खु णं मे गदा पच्चक्खदं । (११८)

राजा ॥ त्वं तावत् कतमां तर्कयसि । (११९)

विदू ॥ णिव्वण्णिअ ॥ तक्केमि जा एसा सिढ़िलबन्धणुव्वन्तकुसुमेण केसहत्थेण वड्ढस्सेअविन्दुणा वअणेण विसेसदो णमिदंसआहिं बाहु-लदाहिं उज्झिदणीविणा वसणेण अ ईसीपरिस्सन्ता विअ अवि-सेअसिणिद्धपल्लवस्स बालचूअरुक्खस्स पास्से आलिहिदा एसा तत्थभोदी सउन्तला इदराओ सहीओत्ति । (१२०)

---

यद्रूप दर्शिता। अर्थान्तरमहत्तेन किञ्चित्तत्सदृशं फलम्। सदसद्वा निदर्श्येत यदि सा स्यान्निदर्शनेति। शान्तम्भवतु। अशान्तमप्रतिहतम्भवतु। वसन्ततिलकं नाम वृत्तम् ॥

(११७) विदू इति। भो इत्यादि। भोस्तिर्यक् आकृतयो दृश्यन्ते सर्वा एव दर्शनीयाः तत्कतमात्र तत्रभवती शकुन्तला। दर्शनीया अवलोकनीया रूपवत्य इत्यर्थ। कतमा आसां मध्ये का। किं यत्तदेकान्यादिति बहूनामेकनिर्धारणे डतम ॥

(११८) मिश्रेति। अणेति। अनभिज्ञ खल्वेष सख्योरूपस्य मोघचक्षुः इयं खलु न मे गता प्रत्यक्षताम्। अनभिज्ञ इवानुभवात्मा। मोघं निरर्थकं चक्षुर्यस्य स मोघचक्षुः। मोघं निरर्थकमित्यमरः। उत्तरत्र खलु प्रश्नार्थः। किमियमस्य प्रत्यक्षतां न गता इत्यर्थः ॥

(११९) राजेति। कतमा आसां मध्ये काम्।

(१२०) विदू इति। निर्वर्ण्य निरीक्ष्य। निर्वर्णनन्तु निध्यानं दर्शनालोकनेक्षणमित्यमरः। तर्कयामीत्यादि। तर्कयामि यैषा शिथिलबन्धनोद्वान्तकुसुमेन केशहस्तेन वृद्धस्वेदबिन्दुना वदनेन विशेषतो नमिताभ्यां बाहुलताभ्याम् उज्झितनीविना वसनेन च ईषत् परिश्रान्तेव अभिषेकस्निग्धपल्लवस्य बालचूतवृक्षस्य पार्श्वे आलिखिता एषा तत्र-भवती शकुन्तला। इतरे सख्याविति। शिथिलबन्धनेन बन्धनशैथिल्येन उद्वान्तानि च्युतानि कुसुमानि यत्र स तेन केशहस्तेन केशकलापेन विशिष्टा। तृतीया विशेषणे। एवमन्यत्रापि।

राजा ॥ निपुणो भवान् अस्त्यत्र ममापि भावचिह्नम् । (१२१)

स्विन्नाङ्गुलिविनिवेशाद्रेखा प्रान्तेषु दृश्यते मलिना ।
अश्रु च कपोलपतितं लक्ष्यमिदं वर्णकोच्छ्वासात् ॥ (१२२)

चेटीं प्रति ॥ चतुरिके अर्द्धलिखितमेतद्विनोदस्थानमस्माभिः तद्गच्छ वर्त्तिकास्तावदानय । (१२३)

चेटी ॥ अज्ज माढव्व अवलम्ब चित्तफलअं जाव आगच्छम्हि । (१२४)

---

माय० पक्ष्म च स्त्रात्र कलापार्थौः कथात्मरे इत्यमरः । विशेषत इति । विशेषतोऽतिशया-न्वितो नम्रोन्नतावंशो लक्ष्मो याभ्यां ते ताभ्याम् । अकुटिलनीलिमा विषखिलनीमिना । नीवी कठोरबन्धनम् । स्त्रीकटी वस्त्रबन्धेपि नीवी परिपणेपि चेत्यमरः । अभिषेकेति । अभिषेकेण सचिक्कणञ्जनेन स्निग्धतरोऽतिमसृण० पक्ष्मो यस्य स तस्य । चिक्कणं मसृणं स्निग्धमित्यमरः । एतेन अस्याशापतिमात्रशोभितत्वामिति । श्लोकोक्तावस्था चिति-तेति गम्यते ॥

(१२१) राजेति । निपुणोऽभिज्ञ । प्रवीणे निपुणोऽभिज्ञविज्ञनिष्णातशिक्षिता इत्य-मरः । अत्र आलिखितायामत्रभवत्याम् । भावचिह्नम् भावस्य सात्त्विकभावस्य स्वेदादे-श्चिह्नम् । लक्षणम् । स्तम्भ स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः । वैवर्ण्यमश्रुप्रलय इत्यष्टौ सात्त्विका० स्मृता इति ॥

(१२२) पूर्व्वोक्तमेव सात्त्विकभावचिह्नं दर्शयति स्विन्नेति । स्विन्नायाः स्वेदयुक्ताया अङ्गुलेर्निवेशादर्पणात् प्रान्तेषु पार्श्वेषु मलिना रेखा दृश्यते तथा वर्णकस्य रङ्गस्य उच्छ्वासात् स्फीतभावात् । कपोलात् गण्डात् पतितमश्रु नेत्रवारि च इदं लक्ष्यं निरी-क्ष्यम् । तथाच स्वेदाश्रु स्तो सात्त्विकभावौ दर्शितौ । इयमार्य्या जातिः ॥

(१२३) चेटीमिति । राजाहेति योज्यम् । एतद्विनोदस्थानं चित्तविनोदनस्थान-मालेख्यमित्यर्थः । ततश्चित्तं अर्द्धोक्तम् । अस्माभिरर्द्धलिखितमसम्यक् लिखितम् । वर्त्तिका वर्णकवर्त्तीः ।

(१२४) चेटीति । अज्जेत्यादि । आर्य्य माधव्य अवलम्बस्व चित्रफलकं यावदाग-च्छामि । अवलम्बस्व धारय । आगच्छामि यावत् आगमनपर्य्यन्तम् ॥

राजा ॥ अहमेवावलम्बे । इति यथोक्तं करोति । (१२५)

चेटी ॥ निष्क्रान्ता । (१२६)

विदू ॥ भो किं एत्थ अवरं आलिहिदव्वं । (१२७)

मिश्र ॥ जो जो पिअसहीए अहिमदो पदेसो तं तं आलिहिदुकामोत्ति तक्केमि । (१२८)

राजा ॥ सखे श्रूयताम् । (१२९)

कार्या सैकतलीनहंसमिथुना स्रोतोवहा मालिनी
पादास्तामभितो निषण्णचमरा गौरीगुरोः पावनाः ।
शाखालम्बितवल्कलस्य च तरोर्निर्मातुमिच्छाम्यधः
शृङ्गे कृष्णमृगस्य वामनयनं कण्डूयमानां मृगीम् ॥ (१३०)

---

(१२५) राजेति । यथोक्तं करोति अवलम्बते ॥

(१२६) चेटीति । सुगमम् ॥

(१२७) विदू इति । भो इत्यादि । भोः किमत्र अपरमालिखितव्यम् । आलिखितव्यम् चित्रितव्यम् ॥

(१२८) मिश्रेति । जो इत्यादि । यो यः प्रियसख्या अभिमतः प्रदेशस्तं तमालिखितुकाम इति तर्कयामि । तर्कयामि तस्य तत्साक्षाज्ज्ञानादिति शेषः ॥

(१२९) राजेति । श्रूयतां यदालिखितव्यमिति शेषः ॥

(१३०) कार्येति । सैकतेषु सिकतामयपुलिनेषु लीनानि उपविष्टानि हंसमिथुनानि हंसयुग्मानि यस्याः सा तथोक्ता । सिकता वालुका । सिकताः स्युर्वालुकापीति । सैकतं सिकतामयमिति अमरः । मालिनी नाम्नी स्रोतोवहा नदी कार्या आलेख्या तां मालिनीमभितः उभयतः । तस्याः समीपे वा । समीपोभयतः शीघ्रसाकल्याभिमुख्येऽभित इत्यमरः । अभ्यु भवपरिसमन्त इत्युक्तोऽभितःसमयेति द्वितीया । गौर्याः पार्वत्या गुरोः पितुर्हिमालयस्य निषण्णा अवस्थिताश्चमरा मृगविशेषा येषु ते । चमरं चामरे स्त्री तु मञ्जरीमृगभेदयोरिति मेदिनी । पावनाः पवित्रताहेतवः पादाः प्रत्यन्तपर्वताः कार्याः । पादाः प्रत्यन्तपर्वता इत्यमरः । तथा शाखासु लम्बितानि वल्कलानि तपस्विनां वसनभूतानि यस्य

विदू ॥ (स्वगतम्) ॥ जधा भन्तो दि तधा तक्केमि पूरिदव्वं अणेण चित्तफलअं आकिदिविहिं लम्बकुच्चाणं वक्कलपरिहाणाणं तावसाणं त्ति । (१३१)

राजा ॥ वयस्य अन्यच्च शकुन्तलायाः प्रसाधनमभिप्रेतं लेखितुं विस्मृतमस्माभिः । (१३२)

विदू ॥ किं विअ । (१३३)

मिश्र ॥ वणवासस्स कण्णआभावस्स अ जं सरिसं भविस्सदि । (१३४)

---

च तयोर्नास्य नदोरधस्ताद्वे कण्वाश्रमस्य कण्वाश्रमस्य पक्षे विषाणे वामनयनं सव्यमतिसुन्दरं वा नेत्रम् । वामं सव्ये प्रतीपे च द्रविणे चातिसुन्दर इति विश्वः । कण्डूयमानां कण्डूं खर्जनं कुर्वतीम् । कण्डूः खर्जूः कण्डूया इत्यमरः । नक्तसयोगरिव इति च । महाद्यादित्वादात्मनेपदम् । मृगीं हरिणीञ्च निर्मातुं आलिखितुमिच्छामि । शार्दूलविक्रीडितं वृत्तम् ॥

(१३१) विदू इति । स्वगतं मनसि स्वगतम् । जधेत्यादि । यथा मन्यते तथा तर्कयामि पूरयितव्यमनेन चित्रफलकमाकृतिभिर्लम्बकूर्चानां वल्कलपरिधानानां तापसानामिति । यथा यत्प्रकारं मन्यते निश्चिनोति तथा तेन प्रकारेणाहमपि तर्कयामि किमित्याह पूरयितव्यमित्यादि । अनेन राज्ञा लम्बकूर्चानां दीर्घश्मश्रूणां कूर्चमस्त्री भ्रुवोर्मध्ये कठिनश्मश्रुकैतवे इति मेदिनी । वल्कलपरिधानानां तापसानामाकृतिभिश्चित्रफलकं पूरयितव्य मिति ॥

(१३२) राजेति । प्रसाधनं वेशरचनम् । आकल्पवेषौ नेपथ्यं प्रतिकर्म प्रसाधनमित्यमरः । अभिप्रेतं लेख्यतयावधारितम् ॥

(१३३) विदू इति । किं विअ किमिव ॥

(१३४) मिश्रेति । वणेत्यादि । वनवासस्य कन्यकाभावस्य च यत् सदृशं भविष्यति । सदृशपदयुक्तं सविशेषणमिवेदं । कन्यकाभावसदृशमाभरणम् । वनवाससदृशं तच्च पुष्पादिमण्डनमिति भावः ॥

राजा ॥

कृतं न कर्णार्पितबन्धनं सखे
शिरीषमागण्डविलम्बिकेसरम् ।
न वा शरच्चन्द्रमरीचिकोमलं
मृणालसूत्रं रचितं स्तनान्तरे ॥ (१२५)

विदू ॥ किंणु क्खु तत्तभोदी रत्तकुवलअसोहिणा अग्गहत्थेण मुहं आवारिअ चकिदचकिदा विअ ट्ठिदा । (१२६)

सावधानं दृष्ट्वा ॥ आ ही ही भो एसो दासीए पुत्तो कुसुमरसपाडच्चरो दुट्ठमहुअरो तत्तभोदीए वअणकमलं अहिलसदि । (१२७)

---

(१२५) राजेति । कृतमिति । सखे कर्णे अर्पितं न्यस्तं बन्धनं वृन्तमन्थिर्यस्य तत् तथोक्तं तथा आगण्डं कपोलपर्यन्तं विलम्बी केसरः शिखा यस्य तत् तथाभूतं शिरीषं शिरीषपुष्पं न कृतं न लिखितम् । एवं स्तनान्तरे स्तनयोरभ्यन्तरे शरच्चन्द्रस्य शरदिन्दोर्मरीचिवत् कोमलं सुकुमारं मृणालसूत्रम्वा मृणालतन्तुर्वा किम्वा मृणालकृतहारश्च न रचितम् न चित्रितम् । अन्ये सूत्रपदं मालामभिधत्ते वचस्त्वादिवत् । वा समुच्चये । वंशस्थविलं नाम वृत्तम् ॥

(१२६) विदू इति । किंस्वित्यादि । किन्तु खलु तत्रभवती रक्तकुवलयशोभिना अग्रहस्तेन मुखमावार्य्य चकितचकितेव स्थिता किंणुखलुभ्यां वितर्कगर्भः प्रश्नो द्योत्यते । रक्तकुवलयमिव रक्तोत्पलमिव शोभत इति रक्तकुवलयशोभी तेन । स्यादुत्पलं कुवलयमित्यमरः । अग्रहस्तेन हस्ताग्रेण पाणिनेत्यर्थः । आवार्य्य आच्छाद्य । चकितचकिता भीतभीता । अतिभीतेत्यर्थः । चकितः शङ्कितो भीत इति त्रिकाण्डशेषः ॥

(१२७) सावधानमिति । समनोऽभिनिवेशमित्यर्थः । आ इत्यादि । आः ही ही भो एष दास्याः पुत्रः कुसुमरसपाटच्चरो दुष्टमधुकरस्तत्रभवत्या वदनकमलमभिलषति । आः कोपे पीड़ायां च । हीहीति विस्मये हासे वा । हीहीशब्दो विस्मयहासयोरिति मेदिनी । दास्याः पुत्रो नीचः । कुसुमरसस्य पाटच्चरश्चौरः ॥

राजा ॥ ननु वार्य्यतामेष धृष्टः । (१३८)

विदू ॥ भो तुमं ज्जेव अविणीदाणं सासिदा इमस्स वारणे पहवसि । (१३९)

राजा ॥ युज्यते । अयि भोः कुसुमलताप्रियातिथे किमत्र परिपतनखेदमनुभवसि । (१४०)

एषा कुसुमनिषण्णा तृषितापि सती भवन्तमनुरक्ता ।
प्रतिपालयति मधुकरी न खलु मधु त्वां विना पिबति ॥ (१४१)

मिश्र ॥ अदिअत्थं क्खु वारिदो । (१४२)

विदू ॥ भो पडिसिद्धवामा क्खु एषा जादी । (१४३)

---

(१३८)। राजेति। वार्य्यतां निवार्य्यताम् धृष्टो निर्लज्ज. ॥

(१३९) विदू इति। भोइत्यादि। भो त्वमेव अविनीतानां शासिता अस्य वारणे प्रभवसि। अविनीतानां दुराचारिणाम्। प्रभवसि प्रभुर्भवसि ॥

(१४०) राजेति। युज्यते तदेव युक्तम्। अयिरनुनये। अयि प्रश्नानुनयोस्तथा सम्बोधनेऽपिचेति मेदिनी। कुसुमेति। कुसुमयुक्ता लता कुसुमलतास्तासां प्रियातिथे प्रीतिसम्बर्द्धनातिथिभूत। किं कथम्। परिपतनखेदं अङ्गोपवेशनहं खम्। नेयं कृपण यतेति भाव. ॥

(१४१) प्रथम म्परिपतनव्यर्थतां प्रदर्श्य पतनार्हां भूमिं विलोभनया प्रदर्शयति एषेति। कुसुमे पुष्पे निषण्णा स्थिता सती पतिव्रता अतएवानुरक्ता सानुरागा एषा मधुकरी तृषितापि मकरन्दं पिपासुरपि भवन्तं प्रतिपालयति प्रतीक्षते खलु यस्मात् त्वां विना मधु पुष्परसं न पिबति। मधु चौद्रे जले क्षीरे मद्ये पुष्परसे इति विश्व ! इत्यमार्य्या ॥

(१४२) मिश्रेति। अदीत्यादि। अत्यर्थं खलु वारित । पर्य्याप्तं वारित इत्यर्थं ॥

(१४३) विदू इति। भो इत्यादि। भो प्रतिषिद्धवामा खल्वेषा जाति । प्रतिषिद्धा निषिद्धा वामो वामा प्रतिकूला चेति प्रतिषिद्धवामा। निषिद्धा सती निषेधप्रतिकूलाचारिणीत्यर्थ । वामौ वल्गुप्रतिपयोरित्यमर.। किम्वा प्रतिषिद्धेन प्रतिषेधेन वामा भावे क्त.। एषा जातिर्मधुकरजाति. ॥

राजा ॥ सकोपम् ॥ भो न मे श्रासने तिष्ठसि श्रूयतां तर्हि सम्प्रति हि । (१४४)

श्रक्लिष्टबालतरुपल्लवलोभनीयं
पीतं मया सदयमेव रतोत्सवेषु ।
बिम्बाधरं दशसि चेद्भ्रमर प्रियाया-
स्त्वां कारयामि कमलोदरबन्धनस्थम् ॥ (१४५)

विदू ॥ भो एव्वं तिक्खदण्डस्स दे कधं ण भाइस्सदि । (१४६)

विदूषक आत्मगतम् ॥ एसो दाव उम्मत्तो अहम्पि एदस्स सङ्गेण ईदिसो ज्जेव संवुत्तो । (१४७)

राजा ॥ निवार्य्यमाणोऽपि कथं स्थित एव । (१४८)

---

(१४४) राजेति । श्रासने श्रादेशे । तिष्ठसि वर्त्तसे । सम्प्रति हि सम्प्रत्येव । हि हेतावधारणे इत्यमरः ॥

(१४५) श्रक्लिष्टेति । बालो श्रचिरोद्गतश्चासौ तरुपल्लवश्चेति सः । अक्लिष्टो अम्लानो यो बालतरुपल्लवस्तमिव लोभनीयम् अतिसुकुमारमिति यावत् अतएव मया रतोत्सवेषु निधुवनोत्सवेषु सदयमेव नतु दृढमिति भावः । पीतं चुम्बितं प्रियायाः प्रफुल्लायाः बिम्बाधरं पक्वबिम्बिकाफलवदधरं भ्रमर त्वं दशसि तदा बध्यतेऽस्मिन्निति बन्धनं कारागृहं कमलस्य उदरमभ्यन्तरमेव बन्धनं तत्र तिष्ठतीति स तथा भूतं कारयामि । कश्चित्तु कमलोदरमेव बन्धनं कमलोदरबन्धनं तेन तिष्ठतीति स तं पुटकनिक्षिप्तमिति यावदिति व्याचष्टे तन्न उत्तरत्र विदूषकवचसोऽसङ्गतेर्दुष्परिहरत्वात् । वसन्ततिलकं नाम वृत्तम् ॥

(१४६) विदू इति । भो इत्यादि । भो एवं तीक्ष्णदण्डस्य ते कथं न भेष्यति तीक्ष्णोऽतितु उग्रो दण्डो यस्य स तस्य । ते तव सम्बन्धे ॥

(१४७) विदूषकेति । एसो इत्यादि । एष तावदुन्मत्तः अहमप्येतस्य सङ्गेन ईदृश एव संवृत्तः । एष राजा । सङ्गेन सहकारेण । ईदृश उन्मत्त इव ॥

(१४८) राजेति । स्थितएव अचरकनिषेधः ॥

राजा ॥ ननु वार्य्यतामेष धृष्टः । (१३८)

विदू ॥ भो तुमं ज्जेव अविणीदाणं सासिदा इमस्स वारणे पहवसि । (१३९)

राजा ॥ युज्यते । अयि भोः कुसुमलताप्रियातिथे किमत्र परि-पतनखेदमनुभवसि । (१४०)

एषा कुसुमनिषण्णा तृषितापि सती भवन्तमनुरक्ता ।
प्रतिपालयति मधुकरी न खलु मधु त्वां विना पिबति ॥ (१४१)

मिश्र ॥ अदिघत्तं क्खु वारिदो । (१४२)

विदू ॥ भो पडिसिद्धवामा क्खु एसा जादी । (१४३)

---

(१३८) । राजेति । वार्य्यतां निवार्य्यताम् धृष्टो निर्लज्जः ॥

(१३९) विदू इति । भो इत्यादि । भो त्वमेव अविनीतानां शासिता अस्य वारणे प्रभवसि । अविनीतानां दुराचारिणाम् । प्रभवसि प्रभुर्भवसि ॥

(१४०) राजेति । युज्यते तदेव युक्तम् । अयिरहनये । अयि प्रश्नानुनयोस्तथा सम्बोधनेपिचेति मेदिनी । कुसुमेति । कुसुमयुक्ता लता कुसुमलतास्तासां प्रियातिथे प्रीतिवर्द्धनातिथिभूत । किं कथम् । परिपतनखेदं अड्डीयोपवेशनदुःखम् । नेयं कुसुम लतेति भावः ॥

(१४१) प्रथम स्परिपतनव्यर्थतां प्रदर्श्य पतनाङ्गं भूमिं विलोभनया प्रदर्शयति एषेति । कुसुमे पुष्पे निषण्णा स्थिता सती पतिव्रता भवत्यनुरक्ता सानुरागा एषा मधुकरी तृषितापि मकरन्दं पिपासुरपि भवन्तं प्रतिपालयति प्रतीक्षते खलु यस्मात् त्वां विना मधु पुष्परसं न पिबति । मधु क्षौद्रे जले क्षीरे मद्ये पुष्परसे इति विश्वः । इयमार्य्या ॥

(१४२) मिश्रेति । अदीत्यादि । अत्यर्थं खलु वारितः । पर्य्याप्तं वारित इत्यर्थः ॥

(१४३) विदू इति । भो इत्यादि । भो प्रतिषिद्धवामा खल्वेषा जातिः । प्रति-षिद्धा निषिद्धा सती वामा प्रतिकूला चेति प्रतिषिद्धवामा । निषिद्धा सती निषेधप्रतिकूला चारिण्येयं । वामो वल्गु प्रतिपयोरित्यमरः । किम्वा प्रतिषिद्धेन प्रतिषेधेन वामा भावे क्तः । एषा जातिर्मधुकरजातिः ॥

इति बाष्पं विसृजति ॥ (१५५)

मिश्र ॥ पुव्वापरविरुद्धो अपुव्वो एसो विरहिमग्गो । (१५६)

राजा ॥ वयस्य कथमेवमविश्रामं दुःखमनुभवामि । (१५७)

प्रजागरात् खिलीभूतस्तस्याः स्वप्नसमागमः ।
बाष्पस्तु न ददात्येनां द्रष्टुं चित्रगतामपि ॥ (१५८)

मिश्र ॥ सव्वधा पमज्जिदं तुए पञ्चादेसदुक्खं पिअसहीए पच्चक्खं ज्जेव सहीजणस्स । (१५९)

---

कान्ता मङ्गलका पुनरपि विश्लेषिता अतुभवनमादपित्रमयी स्थिता चित्रमयो कृता । आर्य्येयम् ॥

(१५५) इतीति । बाष्पं नेत्रजलम् ॥

(१५६) मिश्रेति । पुव्वेत्यादि । पूर्व्वापरविरुद्धोऽपूर्व्व एष विरहिमार्गः । पूर्व्वापरै-र्भूतभाविभिर्विरुद्धो विहितः सेवनाविषय इति यावत् । विरोधो विद्वेष इत्यमरः । अत-एव अपूर्व्वोऽभिनवः । एष विरहिमार्गो विरहावस्थाप्रकारः । तथाचेदृशाकारो न भूतो न भविष्यतीति भावः ॥

(१५७) राजेति । अविश्रामममन्तरतम् ॥

(१५८) प्रजागरादिति । प्रजागरादतिजागरणात् तस्याः प्रियायाः स्वप्नसमागम स्वप्नावस्थायां सम्प्रयोगः खिलीभूत संक्षिप्तोभूतः । प्रायेण न भवतीत्यर्थः । खिलं भवेद-प्रहते शारदंक्षिप्तदेशयोरिति विश्वः । बाष्पस्तु नेत्रजलम् एनां चित्रगतामपि द्रष्टुं न ददाति अनुज्ञामिति शेषः । तथाच तत्चित्रं कर्म्म स्वपनसमक्षे दर्शनमपीत्युक्तं विरह-विनोदनमपास्तमिति भावः ॥

(१५९) मिश्रेति । सव्वधेत्यादि । सर्व्वथा प्रमार्ज्जितं त्वया प्रत्यादेशदुःखं प्रियसख्याः प्रत्यक्षमेव सखीजनस्य । सर्व्वथा । अयम् । सखीजनस्य मम प्रत्यक्षं समक्षमेव प्रयसख्याः शकुन्तलायाः प्रत्यादेशदुःखं प्रत्याख्यानजनितदुःखं त्वया प्रमार्ज्जितं क्षालितम् ॥

मिश्र ॥ अह्णो धीरम्मि जणं रसो विआरेदि । (१४९)

विदू ॥ प्रकाशम् ॥ भो चित्तं क्खु एदं । (१५०)

राजा ॥ कथं चित्रम् । (१५१)

मिश्र ॥ अहम्मि दाणिं अवगदत्था किं उण जधाचिन्तिदाणुसारी एसो । (१५२)

राजा ॥ किमिदमनुष्ठितं पौरोभाग्यम् । (१५३)

दर्शनसुखमनुभवतः साक्षादिव तन्मयेन हृदयेन ।
स्मृतिकारिणा त्वया मे पुनरपि चित्रीकृता कान्ता ॥ (१५४)

---

(१४९) मिश्रेति । अह्णो इत्यादि । अहो धीरमपि जनं रसो विकारयति । रसः प्रवासविप्रलम्भाख्यः शृङ्गारः । विकारयति अन्यथयति । मिश्रकेश्या अधीदानीं भ्रमरे प्राकृतत्वविरहस्येव पतङ्गस्य तस्यापसारणे राज्ञः प्रयासाधिक्यदर्शनात् एवमुक्त इति बोध्यम् । अन्यत्र च । विप्रलम्भोऽथ सम्भोग इत्येष द्विविधो मतः । यत्र तु रतिः प्रकृष्टा नाभीष्टमुपैति विप्रलम्भोऽसौ । स च पूर्वरागमानप्रवासकरुणात्मकश्चतुर्धा स्यादिति । तथा । प्रवासो भिन्नदेशत्वं कार्याच्छापाच्च सम्भ्रमादिति च ॥

(१५०) विदू इति । प्रकाशं स्पष्टम् । भो इत्यादि । भोश्चित्रं खल्विदम् ।

(१५१) राजेति । सुगमम् ॥

(१५२) मिश्रेति । अहम्मीत्यादि ॥ अहमपीदानीमवगतार्था किं पुनर्यथा चिन्तितानुसार्येष । अहमपि इदानीमधुना अवगतो विदितोऽर्थः चित्रितभ्रमररूपं वस्तु यया सा तथोक्ता । अहमपि अधुना भ्रमरस्य चित्रतामवगच्छामि इतः प्राक् ममापि तात्त्विकत्वधीरासीदिति भावः । यथा चिन्तितं अनुसरतीति यथाचिन्तितानुसारी तात्कालिकभ्रमरादिकं मनसा यथा चिन्तयति तदनुसारेणानुशायीति स्वभ्रमः । एष राजा पुनः किं किं वक्ष्यति । तदेकान्तचिन्तावशात् तत्तुभ्रमो न वक्तव्यतां जनयतीति भावः ।

(१५३) राजेति । पौरोभाग्यं दोषैकदर्शित्वम् । येन कर्मणानुष्ठितेन केवलं दोष एव जायते न कश्चित् गुणस्तस्मात्प्रियत्वमित्यर्थः । दोषैकदृक् पुरोभागीत्यमरः ॥

(१५४) दर्शनेति । तन्मयेन तन्मात्रविषयकेण हृदयेन मनसा साक्षात् प्रत्यक्षत इव दर्शनसुखं प्रियाया इति शेषः । अनुभवतो मे मम स्मृतिकारिणा परिबोधकारिणा त्वया

इति वाष्पं विसृजति ॥ (१५५)

मिश्र ॥ पुव्वापरविरुद्धो अपुव्वो एसो विरहिमग्गो । (१५६)

राजा ॥ वयस्य कथमेवमविश्रामं दुःखमनुभवामि । (१५७)

प्रजागरात् खिलीभूतस्तस्याः स्वप्नसमागमः ।
वाष्पस्तु न ददात्येनां द्रष्टुं चित्रगतामपि ॥ (१५८)

मिश्र ॥ सव्वधा पमज्जिदं तए पच्चादेसदुक्खं पिअसहीए पच्चक्खं ज्जेव सहीजणस्स । (१५९)

---

कान्ता शकुन्तला पुनरपि विलोकिता अनुभवप्रमादाच्चित्रमयी स्थिता चित्रमयी लता । आर्य्येयम् ॥

(१५५) इतीति । वाष्पं नेत्रजलम् ॥

(१५६) मिश्रेति । पुव्वेत्यादि । पूर्व्वापरविरुद्धोऽपूर्व्व एष विरहिमार्गः पूर्व्वापरे भूतभाविभिर्विरुद्धो भिन्नः सेवनाभिन्न इति यावत् । विरोधो भिन्नेन इत्यमर । अत एव अपूर्व्वोऽभिनव । एष विरहिमार्गो विरहावस्थाचार । तथाचैतम्याचारो न भूतो न भविष्यतीति भाव ॥

(१५७) राजेति । अविश्राममनवरतम् ॥

(१५८) प्रजागरादिति । प्रजागरादतिजागरणात् तस्याः प्रियायाः स्वप्नसमागम स्वप्नावस्थायां सङ्ग्योग खिलीभूत सच्छिन्नीभूत । प्रायेण न भवतीत्यर्थः । खिल अप्रहते शास्त्रच्छिन्नभेदयोरिति विश्व । वाष्पस्तु नेत्रजलम् एनां चित्रगतामपि द्रष्टुं न ददाति अवकाशमिति शेष । तथाच ततश्चित्रं कर्म्म स्वपनसमये दर्शनमपीत्युक्तं विरहविनोदनमपास्तमिति भाव ॥

(१५९) मिश्रेति । सव्वधेत्यादि । सर्व्वथा प्रमार्ज्जितं त्वया प्रत्यादेशदुःखं प्रियसख्याः प्रत्यक्षमेव सखीजनस्य । सर्व्वथा । अथम् । सखीजनस्य मम प्रत्यक्ष समक्षमेव प्रियसख्या शकुन्तलाया. प्रत्यादेशदुःखं प्रत्याख्यानजनितदुःखं त्वया प्रमार्ज्जितं चालितम् ॥

चतुरिका ॥ प्रविश्य ॥ जेदु जेदु भट्टा वत्तिआकरण्डअं गेह्निअ इदो अच्च पत्थिदह्मि । (१६०)

राजा ॥ ततः किम् । (१६१)

चेटी ॥ तं मे हत्थादो पिङ्गलिआवेदिआए देवीए वसुमदीए अहं ज्जेव अज्जउत्तस्स उवणइस्सं त्ति भणिअ सबलक्कारं गहीदं । (१६२)

विदू ॥ तुमं कधं विमुक्का । (१६३)

चेटी ॥ जाव देवीए लदाविडवलग्गं उत्तरीअअञ्चलं पिङ्गलिआ मोआवेदि दाव णिव्वुविदो मए अप्पा । (१६४)

---

(१६०) चतुरिकेति । चतुरिका वर्त्तिकानयनाय नियुक्तपूर्व्वा चेटी । जेदु इत्यादि । जयति जयति भर्त्ता वर्त्तिकाकरण्डं गृहीत्वा इतोऽहं प्रस्थितास्मि । वर्त्तिकाकरण्डं वर्त्तिकास्थापनोपयोगिवंशादिरचितपेटकम् । करण्डो वंशादिरचितपेटके मधुकोषके इति शब्दाब्धिः ।

(१६१) राजेति सुगमम् ॥

(१६२) चेटीति । तमित्यादि । तन्मे हस्तात् पिङ्गलिकावेदितया देव्या वसुमत्या अहमेवार्य्यपुत्त्रस्य उपनेष्यामीति भणित्वा सबलात्कारं गृहीतम् । तत् वर्त्तिकाकरण्डकम् । पिङ्गलिका अपरा चेटी तया वेदितया चित्रकर्म्मार्थे वर्त्तिकाकरण्डकं भर्त्तारमियं नयतीति निवेदितया । गृहीतं हस्तादिति सम्बन्धः ॥

(१६३) विदू इति । त्वमित्यादि । त्वं कथं विमुक्ता । विमुक्ता देव्येति शेषः ॥

(१६४) चेटीति । जावेत्यादि । यावद्देव्या लताविटपलग्नमुत्तरीयाञ्चलं पिङ्गलिका मोचयति तावन्निर्वृतो मयात्मा । लताविटपो लताविटपो लताविस्तारः । विस्तारो विटपोऽस्त्रियामित्यमरः । लग्नं लग्नम् । उत्तरीयस्य अर्द्धप्रावरणस्य

मिश्र ॥ अह्मो अप्पसंकन्तहिअओवि पढमसम्भावणं रक्खदि थिरसोहिदो दाव एसो । (१६८)

प्रविश्य पत्रहस्ता प्रतीहारी ॥ जेदु जेदु देवो । (१६९)

राजा ॥ वेत्रवति न खल्वन्तरे त्वया दृष्टा देवी । (१७०)

प्रती ॥ देव दिट्ठा पत्तहत्थं मं पेक्खिअ पडिणिउत्ता । (१७१)

राजा ॥ कार्य्यज्ञा देवी कार्य्योपरोधं मे परिहरति । (१७२)

प्रती ॥ देव अमच्चो विण्णवेदि अज्ज रज्जकज्जस्स बहुलदाए एक्कं ज्जेव मए पोरकज्जं पच्चवेक्खिदं तं देवो पत्तारोविदं पच्चक्खीकरेदु त्ति । (१७३)

---

(१६८) मिश्रेति । अह्मो इत्यादि । अहो अन्यसंक्रान्तहृदयोऽपि प्रथमसम्भावनं रक्षति स्थिरसौहृदस्तावदेष । अन्यसंक्रान्तहृदय शकुन्तलाप्रहितमनाः । प्रथमसम्भावनं प्रथमकृतबहुमानम् । स्थिरसौहृद अविचलितप्रेमा ॥

(१६९) प्रविश्येति । जेदु इत्यादि । जयति जयति देव ॥

(१७०) राजेति । खलु प्रश्ने । अन्तरे पथिमध्ये त्वया किं देवी न दृष्टा ॥

(१७१) प्रतीति । देवेत्यादि । देव दृष्टा पत्रहस्तां मां प्रेक्ष्य प्रतिनिवृत्ता । मां भवन्तमुपगच्छन्तीमिति शेष । प्रतिनिवृत्ता प्रतिगता ॥

(१७२) राजेति । कार्य्यज्ञा कार्य्यगौरवज्ञा । कार्य्योपरोधं कार्य्यविरोधं । परिहरति न जनयति ॥

(१७३) प्रतीति । देवेत्यादि । देव अमात्यो विज्ञापयति अद्य राज्यकार्य्यस्य बहुलतया एकमेव मया पौरकार्य्यं प्रत्यवेक्षितं तद्देव पत्रारोपितं प्रत्यक्षीकरोत्विति । पौरकार्य्यराज्यकार्य्ययोरप्राधान्यप्राधान्याभ्यां विभागेन प्रत्यवेक्षणीयत्वादाह बहुलेति । पत्रारोपितं लिपिगतम् । प्रत्यक्षीकरोतु अनुभवतु । इति विज्ञापयति ॥

राजा ॥ इतः पत्रं दर्शय। (१७४)

प्रती ॥ उपनयति। (१७५)

राजा ॥ वाचयति ॥ विदितमस्तु देवपादानां धनवृद्धिर्नाम वणिक् वारिपथोपजीवी नौव्यसनेन विपन्नः, स चानपत्यः, तस्य चानेककोटिसङ्ख्यं वसु, तदिदानीं राजस्वतामापद्यते, इति श्रुत्वा देवः प्रमाणमिति। (१७६)

---

(१७४) राजेति सुगमम् ॥

(१७५) प्रतीति। उपनयति पत्रमुपस्थापयति ॥

(१७६) राजेति। वाचयति पठति। तदेवाह विदितमित्यादि। देवपादानामित्यत्र पादशब्दः सम्मानातिरेकं सूचयति। आस्तामस्त्विति वर्त्तमानस्थाने कर्त्तरि षष्ठी। वणिक् पण्याजीव। वाणिजो वणिक्। पण्याजीव इत्यमरः। वारिणि पन्था वारिपथो नदीमार्गः। पथ्यप्ट इत्य·। तेन जीवति वाणिज्येन वर्त्तते इति वारिपथोपजीवी। नौव्यसनेन नावो व्यसनेन विपदा मज्जनेनेति यावत्। व्यसनं विपदि भ्रंशे इत्यमरः। विपन्नो मृतः। न पतति वंशो येन जातेनेत्यपत्यं पुत्रपर्य्यन्तः। अनपत्यः सकुल्यपर्य्यन्तरहितः। अनेका बहवः कोटयः सङ्ख्या यस्य तदनेककोटिसंख्यम्। वसु धनं वसतीति येन·। रिक्थमृक्थं धनं वसित्यमरः। तत् धनम्। राजस्वतां राजस्वामिकताम्। आपद्यते आप्नोति यस्मात् अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं भवेत्। तदभावे सकुल्यः साहाचार्य्यं शिष्यएव वा। सर्व्वेषामप्यभावेतु ब्राह्मणारिक्थभागिनः। त्रैविद्याः शुचयो दान्ता एवं धर्म्मो न हीयते। अहार्य्यं ब्राह्मणधनं राज्ञा नित्यमिति स्थितिः। इतरेषान्तु वर्णानां सर्व्वाभावे हरेन्नृप इति मनुवचने शुद्धतयाचार्य्यशिष्ययोरश्रवणेन त्रैविद्यब्राह्मणाधिकारस्यैव ब्राह्मणधनगोचरत्वपारिशेषिकत्वेन तद्धने राज्ञएवाधिकारः प्रतीयत इति भावः। देवो राजा प्रमाणं कर्त्तव्यतानिश्चयकृत्। प्रमाणं हेतुमर्य्यादाशास्त्रेयत्ताप्रमातृषु इत्यमरः। भवत्विति शेष·। इति देवपादानां विदितमस्त्विति योजना ॥

राजा ॥ स खलु गर्भः पितृरिक्थमर्हति गत्वैवममात्यं ब्रूहि । (१७९)

प्रती ॥ जं देवो आणवेदि । इति प्रस्थिता । (१८०)

राजा ॥ एहि तावत् । (१८१)

प्रती ॥ प्रतिनिवृत्य ॥ एसाह्मि । (१८२)

राजा ॥ किमनेन सन्ततिरस्ति नास्तीति । (१८३)

येन येन वियुज्यन्ते प्रजाः स्निग्धेन बन्धुना ।
स स पापादृते तासां दुष्मन्त इति घुष्यताम् ॥ (१८४)

---

आन्वते तत इत्युक्तसन्दर्भमात्रपूर्व्वकेन श्लोकमात्रकर्त्तव्यतयोपदेशादर्शयितगर्भत्वं दर्शितम् अथवा पुंसवनसंस्कारेण गर्भस्य पुत्रीकरणश्रुतेरिदमुक्तम् ॥

(१७९) राजेति । स खलु स एव । पितुः पितृत आगतं पितुरिदम्वा । पितृ व्ये ऋक्थो ये इति कठोरेक । पितोऽनिदर्थेऽप्युक्तो गोत्रधो इति । ऋक्थं धनम् । अर्हति अधिकरोति । तथाच गौतम । उत्पत्त्यैवार्थे स्वामित्वालभेतेति ॥

(१८०) प्रतीति । अभिज्ञादि । यद्देव आज्ञापयति ॥

(१८१) राजेति । एहीति पुनरागमनायादेशोयम् ॥

(१८२) प्रतीति । प्रतिनिवृत्य पुनरेत्य । एसाह्मि एषास्मि ॥

(१८३) राजेति । सन्ततिरस्तिनास्तीत्यनेन किं प्रयोजनमितिचेत । तथाच गर्भोत्थिता सन्ततिरस्तीति तस्या एवास्मिन्नधिकारो न राज्ञ सन्ततेरसद्भावे तु राज्ञ एवाधिकार स्यादित्येव प्रचारेणास्वमिति भाव ॥

(१८४) ननु किं कार्य्यमित्यत आह येनेति । प्रजा जना येन येन स्निग्धेन स्नेहवता । स्निग्ध स्नेहयुते चिक्कणपि स्यादिति मेदिनी । बन्धुना स्वजनेन पित्रादिनेति यावत् । बन्धुस्वस्वजना समा इत्यमर० । वियुज्यन्ते विरह्यन्ते पापात् ऋते पाप विना अथवा पापं इत्यर्थः । तासां प्रजानां स स बन्धु दुष्मन्त इति घुष्यतां उच्चैरुच्यताम् । घुषिर् इरनुवोऽविशब्दे इति कविकल्पद्रुम । विशब्द

प्रती ॥ एवं णाम घोसइदव्वं । इति निष्क्रम्य पुनः प्रविश्य । (१८५)

देव काले पवुट्ठं विअ अहिणन्दिदं देवस्स सासणं महाजणेण । (१८६)

राजा ॥ दीर्घमुष्णञ्च निश्वस्य ॥ एवं भोः सन्ततिविच्छेदनिरवलम्बना मूलपुरुषावसाने सम्पदः परमुपतिष्ठन्ते ममाप्यन्ते पुरुवंशश्रिय एष वृत्तान्तः । (१८७)

प्रती ॥ पडिहदं अमङ्गलं । (१८८)

---

छन्दः मन्दः । तुर्य्यैर्जिरैति विकल्पाच्छ्रिः । बोध्यतामित्यपि क्वचित्पाठः । एतेनैतदुक्तम्भवति यत् स्थितायामप्यस्यामन्ततायर्थेजातमधुना मदायत्तमेव यथान्यः कोपि तन्नापहरेदिति । तथाच मनुः । यावदायादिकं रिक्थं तावद्राजानुपालयेत् । यावत् स स्यात्समावृत्तो यावच्चातीतशैशव इति ॥

(१८५) प्रतीति । एवमित्यादि । एतन्नाम घोषयितव्यम् । नाम अङ्गीकारे । नाम प्राकाश्यसम्भाव्यक्रोधोपगमकुत्सने इत्यमरः ॥

(१८६) देवेत्यादि । देव काले प्रवृष्टमिवाभिनन्दितं देवस्य शासनं महाजनेन । काले यथाकालम् । प्रवृष्टं वर्षणम् । अभिनन्दितं समादृतम् । शासनमाज्ञा । महाजनेन साधुवर्गेण ॥

(१८७) राजेति । मूलपुरुषस्य धनिनो अवसाने निधने सम्पदोऽर्थाः सन्ततेरपत्यस्य विच्छेदात् अभावात् निरवलम्बना अस्वामिकाः सत्यः एवमित्थं यथा धनवृद्धेरपत्याभावात्सम्पदो राजानमुपस्थातुमुद्यतास्तथा इत्यर्थः । परमन्यमुपतिष्ठन्ते उपगच्छन्ति । अन्ते नाशे । अन्तोनाशोद्वयो र्मृत्युरित्यमरः । पुरुवंशश्रियः पुरुवंशसम्पदः । अथ सम्पदि सम्पत्तिः श्रीश्च लक्ष्मीश्चेत्यमरः । वृत्तान्तः प्रकारः । वृत्तान्तः स्यात् प्रकरणे प्रकारे कार्त्स्न्यवार्त्तयोरित्यमरः ॥

(१८८) प्रतीति । पडिहदं अमङ्गलं प्रतिहतममङ्गलम् । प्रतिहतं भवतः प्राप्तप्रतिघातमस्त्विति शेषः ॥

राजा ॥ धिङ्मामुपनतश्रेयोऽवमानिनम् । (१८९)

मिश्र ॥ असंसअं पिअसहीं ज्जेव हिअए कदुअ निन्दिदो अणेण अप्पा । (१९०)

राजा ॥

संरोपितेऽप्यात्मनि धर्म्मपत्नी
त्यक्ता मया नाम कुलप्रतिष्ठा ।
कल्पिष्यमाणा महते फलाय
वसुन्धरा काल इवोप्तबीजा ॥ (१९१)

मिश्र ॥ अपरिच्छिन्ना दाणिं दे भविस्सदि । (१९२)

चेटी ॥ जनान्तिकम् ॥ अज्जे एदं पत्तं पेसअन्तेण किं विआरिदं असमञ्जेण पेक्ख दाव भट्टिणो वाअजलप्पवाओ संवुत्तो अथवा ण

---

(१८९) राजेति । उपनतमुपगतं श्रेयो मङ्गलं शकुन्तलाख्यमपत्नित्वमैः । अवमन्यते यस्तं मां धिक् । श्रेयो धर्म्मसङ्गेचेति विश्व॰ ॥

(१९०) मिश्रेति । असंशयमित्यादि । असंशयं प्रियसखीमेव हृदये कृत्वा निन्दितोऽनेनात्मा । हृदये कृत्वा अभिसन्धाय स्मृत्वा वा । अनेन राज्ञा ॥

(१९१) राजेति । संरोपितेऽपीति । काले यथाकालमुप्तबीजा कृतबीजवपना अतएव महते विपुलाय फलाय शस्याय कल्पिष्यमाणा भविष्यन्ती वसुन्धरा भूमिरिव कुलस्य प्रतिष्ठा कीर्त्तं स्थितिर्वा यस॰ सा तथोक्ता धर्म्मपत्नी धर्म्मतः परिणीता पत्नी आत्मनि अस्मिन् संरोपितेऽपि गर्भभावेन वसामाऽहितेऽपि सति । आत्मा वै जायते पुत्त्र इति श्रुते॰ । मया नाम त्यक्ता । नाम कुत्सने । अत्रोपमालङ्कार । वृत्तमुपजाति ॥

(१९२) मिश्रेति । अपरीत्यादि । अपरिच्छिन्नेदानीं ते भविष्यति । पुन-र्संघाते लयेति भावः ॥

मिश्र ॥ हद्धी हद्धी सदि क्खु दोवि ववधाणदोसेण अन्धआरं अणुहोदि राएसी॥ (१९७)

चेटी ॥ भट्टा अलं सन्दाविदेण वअत्थो ज्जेव पहू अवरासु देवीसु अणुरूवपुत्तजम्मेण पुव्वपुरुसाणं अणिणो भविस्सदि। (१९८)

आत्मगतम् ॥ ण मे वअणं पडिच्छदि अणुरूवं वि ओसधं आदङ्कं णिवत्तेदि। (१९९)

---

निपाय इत्यमरः। क करिष्यति इति एवं चिन्तयित्वा पितरो मम पूर्व्वजा प्रकृतिविकलेन तमपरदितेन। प्रकृति जनयोस्तयोस्तथा दुहितरिकृतेति विश्व। मया प्रदिष्टं त्वत्पूदक तर्पणजलं नूनं निश्चित धौत क्षालितोऽस्रुसेको वाष्पबिन्दुर्येन, तत् यथाक्लान्तया पिबन्ति। अधरपतितो नयननिगलिताश्रुबिन्दुर्येनोदकपानेन क्षालितो भवति तादृशं पिबतीत्यर्थं। उदकविशेषणस्ते तथाभूतं कृत्वा पिबतीत्यर्थं। वसन्ततिलकं वृत्तम् ॥

(१९७) मिश्रेति। हद्धीत्यादि। हा धिक् हा धिक् सति खलु दोषे व्यवधानदोषेणान्धकारमनुभवति, राजर्षिः। एतेनैतदुक्तम्भवति यत् तत्पुत्रात्मजे स्थानान्तरगततेन अनपत्यता मन्यते महाराज इति ॥

(१९८) चेटीति। भट्टेत्यादि। भर्त्तरलं सन्तापितेन वय स्यएव प्रभुरपरासु देवीषु अनुरूपपुत्रजन्मना पूर्व्वपुरुषाणामनृणो भविष्यति। सन्तापितेन सन्तप्तीकृतेन अलमिति शेष। वय स्योयुवा। वय स्थस्तरुणो युवत्यमर। प्रभुभर्त्तानित्यर्थ। अपरासु यज्ञ-न्नवेतरासु। देवीषु कृताभिषेकमहिषीष। अनुरूपपुत्रजन्मना आत्मसदृशपुत्रोत्पत्त्या। पूर्व्वपुरुषाणां पितॄणाम्। अनृण ऋणशून्य। तदाह यज्ञशिखिलतपटोनमियमा। यत्र कचन जातेन पिता पुत्रेण नन्दति। तेन चानृणता याति पितॄणां पिण्डदेन चैति। विष्णुधर्म्मोत्तरश्च। आद्येन प्रजयाचैव पितॄणामनृणोभवदिति ॥

(१९९) आत्मगतमिति। अन्तिकस्वगतमित्यर्थं। णेत्यादि। न मे वचनं प्रतीच्छति। अनुरूपमपि औषधमातङ्कं निवर्त्तयति। प्रतीच्छति स्वहाति।

राजा॥ मोहनाटितकेन। (२००)

आमूलशुद्धसन्तति कुलमेतत् पौरवं प्रजावन्धेन।
मय्यस्तमितमनार्ये देश इव सरस्वतीस्रोतः॥ (२०१)

इति मोहमुपागतः॥ (२०२)

---

अपिरत्र सम्भावनायाम्। तथाच सम्भावयामि अहमुपपत्त्युपयुक्तमौषधमातङ्कं रोगं निरस्यति निःशारयतीत्यर्थः। रुक्तापशङ्काऽऽमयातङ्क इत्यमरः। अत्रायमाशयः। अयोग्यतया मद्वचनं न प्रतीष्टं भवत्यावचनन्तु असंशयं प्रयुक्तं सम्भावयामि तत्तुल्यत्वेन सन्तापं शमयितुं प्रभवमिति॥

(२००) राजेति। मोहनाटितकेन मोहरूपतया॥

(२०१) आमूलेति। प्रजावन्धेन सन्ततिरहिते देशपक्षे जनशून्ये मर्यादारण्यादिमात्रे इति यावत्। प्रजा स्यात्सन्ततौ जने इत्यमरः। अतएव अनार्ये अप्रयस्ते पक्षे अगम्ये। अर्लिङ्गत्यामित्यस्य रूपम्। मयि आमूलमादितः शुद्धा अविच्छिन्ना सन्ततिः पुत्र-पौत्रादिपरम्परा पक्षे धारा यस्य तत्। सन्ततिः पङ्क्तौ गोत्रे पारम्पर्ये पुत्रपौत्राद्यामिति मेदिनी। पौरवं पुरुसम्बन्धि पक्षे भूयिष्ठमेव। प्रभूतं पुरुभूयिष्ठमित्यमरः। स्वार्थे ष्यञ्। एतत्कुलं तथाभूते देशे तथाभूतं सरस्वत्या नद्याः स्रोत इव अस्तमदर्शनं मितं गतम्। अस्तमदर्शन इत्यमरः। अत्रालङ्कार उपमा सा च पूर्णा श्रौती च। तदुक्तं दर्पणे। साम्यं वाच्यमवैधर्म्यं वाक्यैक्ये उपमा द्वयोः। सा पूर्णा यदि सामान्यधर्म्म औपम्य-वाचि च। उपमेयञ्चोपमानं भवेद्वाच्यमियं पुनः। श्रौती यथेववाशब्दा इवार्थे वत्र वा यतिरिति। आर्य्या जातिः॥

(२०२) इतीति। मोहं मूर्च्छाम्। मूर्च्छा तु कश्मलं मोह इत्यमरः। एतेनोपान्त्य-दशा वर्णिता। परमदशायास्तु प्रत्युज्जीवनसम्भावनाऽनन्तरेणावर्णनीयत्वाचाटके प्रतिषेधाच्च इत्येव विरहवर्णनानिवृत्तिः। तदुक्तम्। चक्षूरागस्ततश्च मनसः सङ्कल्पभावना च व्यावृत्तिः स्यात्तदनु विषयग्रामतश्चेतसोऽपि। निद्राच्छेदस्तदनु तनुता निस्त्रपत्वं ततोऽनू-न्मादो मूर्च्छा तदनु मरणं स्युर्दशा प्रक्रमेणेति। अपरञ्च। रसविच्छेदहेतुत्वान्मरणं नैव वर्ण्यते। जातप्रायन्तु तद्वाच्यं चेतसा काङ्क्षितं तथा। वर्ण्यतेऽपि यदि प्रत्युज्जीवनं स्याददूरत इति॥

चेटी ॥ ससम्भ्रमम् ॥ समस्ससदु समस्ससदु भट्टा । (२०३)

मित्र ॥ किं दाणिं ज्जेव णिव्वुदं करेमि अधवा सुदं मए सउन्तलं समस्ससन्तीए देवजणणीए सुहादो जण्णभाअसमुस्सुआओ देवाओ ज्जेव तह अणुचिट्ठिस्सन्ति जह सो भट्टा अचिरेण धम्मपदिणीं तुमं अहिणन्दिस्सदि त्ति ता ण जुत्तं मे एत्थ विलम्बिदुं जाव इमिणा वुत्तन्तेण पिअसहीं सउन्तलं समस्सासेमि । इत्युद्भ्रान्तकेन निष्क्रान्ता । (२०४)

नेपथ्ये ॥ अो अब्बह्मण्णं अब्बह्मण्णं (२०५)

राजा ॥ प्रत्यागतचेतनः कर्णं दत्त्वा ॥ अये माधव्यस्येवार्त्तनादः । (२०६)

चेटी ॥ सो णाम माधव्वो तवस्सी पिङ्गलिआमिस्सिआहिं चेडिआहिं चित्तफलअहत्थो पाविदो भवे । (२०७)

---

(२०३) चेटीति । ससम्भ्रमं सत्वरम् । समेत्यादि । समाश्वसितु समाश्वसितु भर्त्ता ॥

(२०४) मिश्रेति । किमित्यादि । किमिदानीमेव निर्वृतं करोमि अथवा श्रुतं मया शकुन्तलां समाश्वासयन्त्या देवजनन्या सुखात् यज्ञभागसमुत्सुका देवा एव तथा अनुष्ठास्यन्ति यथा स भर्त्ता अचिरेण धर्म्मपत्नीं त्वामभिनन्दिष्यतीति तन्न युक्तं मे अत्र विलम्बितुं यावदनेन वृत्तान्तेन प्रियसखीं शकुन्तलां समाश्वासयामि । निर्वृतं सुस्थम् । करोमि शकुन्तलावृत्तान्तनिवेदनेनेति शेषः । देवजनन्या अदिते । यज्ञभागाय समुत्सुकाः सम्युत्कण्ठिताः । एतेन वत्सराजके ●नयकुले सभोग्ययज्ञभागसोपाधेयाना तदनुगानसम्भावना दर्शयति । अभिनन्दिष्यति आदरिष्यते । अनेन यावद्वृत्तान्तं ... मय । उद्भ्रान्तकेन आकाशपथोद्गमनाभिनयेन ॥

(२०५) नेपथ्य इति । भो इत्यादि । भो अब्रह्मण्यमब्रह्मण्यम् । अवध्यवध-मित्यर्थः । अब्रह्मण्यमवध्योक्तावित्यमरः ॥

(२०६) राजेति । प्रत्यागतचेतनः पुनरागतचेतनः विगतमोह इत्यर्थः । अये इति सम्भ्रमे । आर्त्तनादः आपच्छब्दः ॥

(२०७) चेटीति । सोऽत्यादि । स नाम माधव्यस्तपस्वी पिङ्गलिकामिश्रिताभि-

राजा ॥ चतुरिके गच्छ मद्वचनादनिषिद्धपरिजना देवी-सुपालभस्व । (२०८)

चेटी ॥ निष्क्रान्ता । (२०९)

नेपथ्ये ॥ भूयः स एव शब्दः । (२१०)

राजा ॥ परमार्थतो भीतिभिन्नस्वरो ब्राह्मणः । कः कोऽत्र भोः । (२११)

प्रविश्य कञ्चुकी ॥ आज्ञापयतु देवः । (२१२)

राजा ॥ निरूप्यतां किमेवं माधव्यब्राह्मणः क्रन्दतीति । (२१३)

कञ्चु ॥ यावदवलोकयामि । इति निष्क्रम्य ससम्भ्रमं पुनः प्रविष्टः । (२१४)

राजा ॥ पार्वतायन न खलु किञ्चिदत्याहितम् । (२१५)

---

चेटिकाभिर्विलम्बपत्रकस्य प्राप्तो भवतु । नाम सम्भावनायाम् । तपस्वी अनुकम्प्यः । पिङ्गलिकाभिश्चित्ताभिः पिङ्गलिकाभिर्लिखिताभिः ॥

(२०८) राजेति । मद्वचनात् राजा मदीयमुक्त्वा । अनिषिद्धा विप्रयोजनकपादकार्य-करणादनिवारिता परिजना यया सा तथोक्ता देवीमुपालभस्व स एव ते आचार इति दुर्वाक्यं वद । दुर्वादः साङ्गुपालम्भनं च स्तुतिपूर्वकं । सोल्लुण्ठनं समनिन्द्रस्तु वस्तन्न परिभाषणमिति जटाधरः ॥

(२०९) चेटीति । सुगमम् ॥

(२१०) नेपथ्य इति । भूयः पुनः स एव शब्दः अब्रह्मण्यमब्रह्मण्यमितिशब्दः ॥

(२११) राजेति । परमार्थतो वस्तुतः । भीतिभिन्नः भीत्या पृथग्विधः स्वरो यस्य स तथोक्तः । ब्राह्मणो माधव्यः । भोः अत्र कः कः अस्तीति शेषः ॥

(२१२) प्रविश्येति । सुगमम् ॥

(२१३) राजेति । निरूप्यतां निर्धार्यताम् । किं कथम् । एवं क्रन्दतीति सम्बन्धः ॥

(२१४) कञ्चुक इति । यावत् यद्भवति ॥

(२१५) राजेति । खलु प्रश्ने । अत्याहितं महाभयम् । अत्याहितं महाभीति-रित्यमरः ॥

कञ्चु ॥ नैवम्। (२१६)

राजा ॥ ततः कुतोऽयं वेपथुः। तथाहि (२१७)

प्रागेव जरसा कम्पः सविशेषस्तु सम्प्रति।

आविष्करोति सर्व्वाङ्गमश्वत्थमिव मारुतः ॥ (२१८)

कञ्चु ॥ परित्रायतां सुहृदं महाराजः। (२१९)

राजा ॥ कस्मात् परित्रातव्यः। (२२०)

कञ्चु ॥ महतः कृच्छ्रात्। (२२१)

राजा ॥ अये भिन्नार्थमभिधीयताम्। (२२२)

कञ्चु ॥ योऽसौ दिगवलोकनप्रासादो मेघच्छन्दो नाम। (२२३)

---

(२१६) कञ्चु इति। नैवं न किञ्चिन्मङ्गलमित्यर्थः ॥

(२१७) राजेति। ततो महाभीत्यभावात्। अयं सातिशयः। वेपथुः कम्पः। तथा दर्शयितुमाह तथाहीति ॥

(२१८) प्रागिति। जरसा वार्द्धक्येन। जरस जरेति जरायन्दस्य जरसादेशः। प्रागेव इतः पूर्व्वमेव कम्पोऽस्य वयसञ्जातः इति शेषः। सम्प्रति अधुना तु सविशेषः सातिशयः सन् मारुतः प्रबलो वायुरश्वत्थं महावृक्षमिव सर्व्वाङ्गमाविष्करोति प्रकाशयते अत्यन्तमिति सर्व्वाङ्गमितिच देशाध्वकालभावगाढेरित्यधिकरणस्य कर्मत्वं मारुतोऽश्वत्थ इव कम्पः सर्व्वमिपक्षे प्रकाशयत इत्यर्थः। कर्माविवक्षया धातोर्व्यापारफलयोरेकाधिकारे व्यकर्मकत्वात्। यथोक्तं भिक्षाचिन्निःशेदना च प्रभेदयं करोतेष निष्पत्तिनिष्पादनाच भावो तद्वत् पचतीत्यादीति। अतएवोक्तम्। धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात्। प्रसिद्धेरविवक्षातः कर्मणोऽकर्म्मिका क्रिया इति। लुप्तोपमालङ्कारः ॥

(२१९) कञ्चु इति। परित्रायतां परिरक्षतु। सुहृदं मामव्ययम् ॥

(२२०) राजेति। सुगमम् ॥

(२२१) कञ्चु इति। कृच्छ्रात् कष्टात्। सोत्कर्षं तत्कृच्छ्राभीतमित्यपरः ॥

(२२२) राजेति। भिन्नार्थं स्पष्टार्थम्। क्रियाविशेषणम् ॥

(२२३) कञ्चु इति। दिगवलोकनाय प्रासादो दिगवलोकनप्रासादः ॥

राजा ॥ विस्तरतः। (२२४)

कञ्चु ॥

तस्याग्रभागाद्गृहनीलकण्ठै-
रनेकविश्रामविलङ्घ्यशृङ्गात्।
सखा प्रकाशेतरमूर्तिना ते
केनापि सत्त्वेन निगृह्य नीतः॥ (२२५)

राजा ॥ उत्थाय ॥ आः ममापि सत्त्वैरभिभूयन्ते गृहाः।
अथवा बहुप्रत्यवायं भूपत्वम्। (२२६)

अहन्यहन्यात्मन एव तावत्
ज्ञातुं प्रमादस्खलितं न शक्यम्।
प्रजासु कः केन पथा प्रयाती-
त्यशेषतः कस्य पुनः प्रभुत्वम्॥ (२२७)

---

(२२४) राजेति। तत्र किं किं वृत्तम्॥

(२२५) कञ्चु इति। तस्येति। गृहनीलकण्ठैः पालितमयूरैः। मयूरो बर्हिणो बर्ही नीलकण्ठो भुजङ्गभुगित्यमरः। अनेकविश्रामैरुत्तरोत्तरभागेषु अनेकशो विश्रामैः विलङ्घ्यमारोह्यं शृङ्गं शिखरं यस्य तस्मात् अत्युच्चादिति यावत्। शृङ्गं प्रभुत्वे शिखरे इति मेदिनी। तस्य मेघच्छन्दागारस्याग्रभागात् उपर्यलिन्दात् प्रकाशेतरमूर्तिना विद्याविशेषप्रच्छन्नाकृतिना केनापि सत्त्वेन पिशाचादिना। सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोरिति विश्वः। तव सखा माधव्यो निगृह्य पराभूय नीतः स्थानान्तरं प्रापितः। वृत्तमुपजातिर्नाम॥

(२२६) राजेति। आः कोपे। ममापि सततसदनुष्ठानपरस्यापि। अभिभूयन्ते आक्रम्यन्ते। गृहा इति पुंलिङ्गबहुवचनान्तः। गृहाः पुंसि च भूम्न्येवेत्यमरः। बहवः प्रत्यवाया विहितानुष्ठानजनितादृष्टविशेषा यस्य स तत् बहुप्रत्यवायम्॥

(२२७) अहनीति। अहन्यहनि प्रत्यहमात्मन एव प्रमादेनानवधानतया स्खलितं विध्यतिक्रमस्तावत् ज्ञातुं निर्णेतुं न शक्यं प्रजासु विषयवासिजनेषु पुनः को जनः केन

शकु ॥ पश्चात्तापविवर्णं राजानं दृष्ट्वा सवितर्कम् ॥ ण क्खु अज्ज-उत्तो अअं ता को एसो किदरक्खामङ्गलं दारअं मे गत्तसंसग्गेण दूसेदि । (१२८)

बालः ॥ मातरमुपगम्य ॥ अम्बको एसो मं पुत्तकेत्ति ससिणेहं आलिङ्गदि । (१२९)

राजा ॥ प्रिये क्रौर्य्यमपि मे त्वयि प्रयुक्तमनुकूलपरिणामं संवृत्तम् । तदहमिदानीं त्वया प्रत्यभिज्ञातमात्मानमिच्छामि । (१३०)

शकु ॥ स्वगतम् ॥ हिअअ समस्सस समस्सस पवुत्तिअ परिच्चत्त-मच्छरेण अणुकम्पिदह्मि देव्वेण अज्जउत्तो क्खेव एसो । (१३१)

---

धात्र शिखयापि कथञ्चिदपि धारयेदिति विष्णुधर्मोत्तरे वैधव्यलक्षणमभिधानात्तथा-विधानामेकवेणीधारणसमाचारः। अलङ्कारालङ्कारिकाः। प्रवासोभिन्नदेशत्वं कार्य्या-च्छापाच्च सम्भ्रमात्। तत्राङ्गचेलमालिन्यमेकवेणीधरं शिरः। निःश्वासोच्छ्वासरुदित-भूमिपातादि जायते। शकुन्तला अतिनिष्करुणस्य अतिनिर्दयस्य मम दीर्घमतिचिरोद्या-पनं विरहव्रतं वियोगरूपं व्रतं बिभर्त्ति पालयति। दीर्घकालीनधर्म्मादिव्रतस्थिताया अपि पूर्व्वोक्तनियमधार्य्यो द्रष्टव्यः। विरहव्रतमिति रूपकालङ्कारः। तदुक्तं दण्डिना उपमैव तिरोभूतभेदा रूपकमिष्यत इति। अपरवक्त्रं नाम वृत्तम् ॥

(१२८) शकु इति। पश्चादिति। पश्चात्तापेन अनुतापेन विवर्णं मलिनं। एतदेव वितर्के हेतुः। णेत्यादि। न खल्वार्य्यपुत्रोऽयं तत्क एष कृतरक्षामङ्गलं दारकं मे गात्र-संसर्गेण दूषयति। न खलु नैव। कृतेति। कृतं रक्षायै मङ्गलं यस्मिन् तम्। दारकं बालकम्। दूषयति दोषं नयति। रक्षाकरण्डकस्य भस्मापगमादित्याशयः ॥

(१२९) बाल इति। अम्बेत्यादि। अम्ब क एष मां पुत्रकेति सस्नेहमालिङ्गति। अम्ब मातः। सुभ्रू दीर्घजम्बार्थानामिति सम्बुद्धौ ह्रस्वः। पुत्रकेति सम्बुद्ध्येति पदः ॥

(१३०) राजेति। प्रिये त्वयि प्रयुक्तमाचरितं क्रौर्य्यं नृशंसत्वमपि मे मम सम्बन्धे अनु-कूलः सुखहेतुः परिणामः शेषो यस्य तत् तथोक्तं संवृत्तम्। सपुत्रायास्ते कालेन समागमा-दिति भावः। तत् तस्मादिदानीमात्मानं त्वया प्रत्यभिज्ञातं परिचितमिच्छामि ॥

(१३१) शकु इति। स्वगतमनतिस्फुटम्। हिअअेत्यादि। हृदय समाश्वसिहि समा-श्वसिहि प्रवृत्य परित्यक्तमत्सरेण अनुकम्पितास्मि दैवेन। आर्य्यपुत्र एवैषः। प्रवृत्त

राजा ॥ प्रिये (१२२)

स्मृतिभिन्नमोहतमसो दिष्ट्या प्रमुखे स्थितासि मे सुमुखि ।
उपरागान्ते शशिनः समुपगता रोहिणी योगम् ॥ (१२३)

शकु ॥ सहर्षम् ॥ जअदु जअदु अज्जउत्तो । इत्यर्धोक्ते बाष्पगद्गदकण्ठी विरमति । (१२४)

राजा ॥ प्रिये (१२५)

---

मत्सरात्परम् । मत्सरीति । परित्यक्तो मत्सरः । शुभद्वेषः क्रोधो वा येन तथोक्तेन । मत्सरोऽन्यशुभद्वेष इत्यमरः । क्वचित् क्रोधोऽपि मत्सर इति रत्नकोषः ॥

(१२२) राजेति । प्रिये इति श्लोकीयविशेषणेन सह क्रियायामन्वेति ॥

(१२३) स्मृतीति । दिष्ट्या आनन्दे । हे सुमुखि प्रिये स्मृत्या पूर्ववृत्तान्तस्मरणेन भिन्नं खण्डितं मोहरूपं तमो यस्य स तथोक्तस्य मे मम प्रमुखे अग्रे त्वं स्थितासि तावद्रोहिणी उपरागान्ते राहुयोगापगमे शशिनश्चन्द्रमसो योगं सम्बन्धमुपगता । कार्त्तिक्यामुपरागे सतीति भावः । उपरागो ग्रहो राहुग्रस्ते त्विन्दौ च पूष्णि चेत्यमरः । अत्र शकुन्तलायाः [illegible] रोहिण्याश्च चन्द्रसंयोगस्य इति बिम्बानुबिम्बत्वप्रदर्शनान्निदर्शनालङ्कारः । साचात्र सम्भवद्वस्तुसम्बन्धनिबन्धना । यदुक्तं सम्भवन् वस्तुसम्बन्धोऽसम्भवन् वापि कुत्रचित् । यत्र बिम्बानुबिम्बत्वं दर्शयेत् सा निदर्शनेति । आर्या जातिः ॥

(१२४) शकु इति । जअदु इत्यादि । जयतु जयतु आर्यपुत्रः । बाष्पेण गद्गदः कण्ठो यस्याः सा । संयोगोत्थप्रहर्षजनितो निर्वेदात् बाष्पगद्गद आनन्देनेषोऽभ्यासादपि [illegible] पतितेन घोषादिनादीव । अर्धा-द्यस्तु अर्धाभिव्यक्तपदत्वाद् अर्धवर्णोक्तमित्यपि । [illegible] अर्धा-दिरीति इत्युक्ताः । विरमति वक्तव्यादिति शेषः ॥

(१२५) राजेति । प्रिये इति पूर्ववदन्वयः ॥

वाष्पेण प्रतिषिद्धेऽपि जयशब्दे जितं मया ।
यत्ते दृष्टमसंस्कारपाटलोष्ठपुटं मुखम् ॥ (१२६)

बाल॰ ॥ अम्ब को एसो । (१२७)

शकु ॥ भाअधेआइं पुच्छ । इति रोदिति । (१२८)

राजा ॥

सुतनु हृदयात् प्रत्यादेशव्यलीकमपैतु ते
किमपि मनसः सम्मोहो मे तदा बलवानभूत् ।
प्रबलतमसामेवंप्रायाः शुभेषु हि वृत्तयः
स्रजमपि शिरस्यन्धः क्षिप्तां धुनोत्यहिशङ्कया ॥ (१२९)

---

(१२६) वाष्पेणेति । जयशब्दे वाष्पेण नेत्रजलेन प्रतिषिद्धे स्तम्भितेऽपि मया जितं मम जयोऽभूत् यत् यस्मात् ते तव असंस्कारेण अलङ्कारविरहेण पाटलं ईषद्रक्तवर्णं ओष्ठपुटं ओष्ठपुटको यत्र तथाभूतं मुखं दृष्टम् । श्वेतरक्तस्तु पाटल इत्यमरः । "शरीरसंस्कारनिषेधादुपावनात् आभ्यन्तरत्वनिषयादिदमुक्तम्" । पाटलोष्ठेति वीरोलोरित्यकारलोपः ॥

(१२७) बाल इति । अम्ब को एसो अम्ब कः एषः ॥

(१२८) शकु इति । भाअइत्यादि । भागधेयानि पृच्छ । भागधेयानि भाग्यानि । तथाच भाग्यैरेवायमिह्रागत इति तान्येव मह्यं सूचितानीति भावः ।

(१२९) राजेति । सुतन्विति । हे सुतनु प्रत्यादेशेन मत्कृतप्रत्याख्यानेन व्यलीकं पीडा ते तव हृदयादपैतु अपसरतु पीडार्थेऽपि व्यलीकं स्यादित्यमरः । तदा तत्काले किमपि अनिर्वचनीयो बलवान् मे मम सम्मोहो भ्रमोऽभूत् । हि यस्मात् प्रबलं बलवत् तमो मोहो ध्वान्तं वा येषां तेषां शुभेषु मङ्गलेषु विषयेषु वृत्तय प्रवृत्तय । वृत्तिर्निवर्त्तनाजीव कौशिक्यादिप्रवर्त्तन इति मेदिनी । एवंप्राया प्रायेण बाहुल्येन एवम्भिदम्प्रकारा । प्रायोभूम्न्यन्तगमन इत्यमरः । व्य भूर्व्व मित्येषद्वारस्य पूर्व्वनिपात । अत्र दृष्टान्तयति स्रजमित्यादि । तथाहि

इति पादयोः पतति। (१४०)

भर्त्रु। उट्ठेदु उट्ठेदु अज्जउत्तो णूणं मे सुहप्पडिबन्धअं पुराकिदं तेसुं दिअहेसुं परिणामसुहं आसी जेण सावराहोवि अज्जउत्तो मह विरसो संवुत्तो। (१४१)

---

अन्यो नाम प्रबलतमः यदि सि विप्राप्रियैर्वा अत्र माधवमपि अङ्गिरद्वया तदङ्ग- संशयारोपेण चुनोति कम्पयति। अत्र प्रबलतमवाणमित्यादिनाऽर्थान्तरन्यास स च तजमित्यादिवशात्साङ्गः। इदं हरिणी नाम वृत्तम्॥

(१४०) पततीति। इत्यर्थं इत्यर्थः। पादयोरिति। कोपशान्त्यर्थमिदम्। तदुक्तम्। सामभेदोऽथ दानञ्च नत्युपेक्षे रसान्तरम्। तद्भङ्गाय पतिः कुर्यात् षडु- पायानिति क्रमात्। तत्र प्रियवाचः साम भेदस्तत्सख्युपार्जनम्। दानं व्याजेन भूषादेः पादयोः पतनं नतिः। सामादौ तु परिक्षीणे स्यादुपेक्षावधारणम्। रभसत्रासहर्षादेः कोपभ्रंशो रसान्तरमिति॥

(१४१) भर्त्रु इति उत्तिष्ठत्वित्यादि। उत्तिष्ठतु उत्तिष्ठतु आर्यपुत्रः नूनं मे सुखप्रतिबन्धकं पुराकृतं तेषु दिवसेषु परिणामसुखमासीत् येन सापराधोऽपि आर्यपुत्रो मयि विरस संवृत्तः। नूनमित्यादि। परिणामे परिपाकदशायां सुखयतीति परिणामसुखमथच तेषु अतीतेषु दिवसेषु सुखप्रतिबन्धकं सुखव्याघातकं मे पुराकृतं पौर्वदैहिककर्मजन्यपापं नूनमवश्यमासीत्। मत्वशीभूतेऽपि मदीयदोषक्षमे भवत्सुखप्रतिबन्धके कथं स्वपुराकृतानुमानमिति राजप्रश्नपरिजिहीर्षयाह येनेत्यादि येन हेतुना। सापराधोऽपि अनुरागादिविषयेण सापराधोऽपि। अपराधः स्यादागोऽपराध इत्यमरः। विरसो विगतरागः। शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रस इत्यमरः। तथाच तदानीमपि सुखप्रतिबन्धकेऽस्थाने मद- नुरागपात्रे निर्निदानायासा उत्पादावस्थानेन भाव राजतानुमानमासम- मिति भाव। यदाह मनुमहराजम्। पुराकृतानि पापानि फलन्त्यस्मिन्प्रजो- त्तमाः। रोगदौर्मनस्यरूपेण तथैवेष्टवधेन चेति॥

राजा ॥ उपविशति । (१४२)

शकु॰ ॥ अध कधं अज्जउत्तेण सुमरिदो दुक्खभाई अअं जणो । (१४३)

राजा ॥ उद्धृतविषादशल्यः कथयिष्यामि । (१४४)

मोहान्मया सुतनु पूर्वमुपेक्षितस्ते
यो बाष्पबिन्दुरधरं परिबाधमानः ।
तं तावदाकुटिलपक्ष्मविलग्नमद्य
कान्ते प्रमृज्य विगतानुशयो भवामि ॥ (१४५)

इति यथोक्तं करोति ॥ (१४६)

---

(१४२) राजेति । सुगमम् ॥

(१४३) शकु इति । अधकधमिति । अथ कथमार्यपुत्रेण स्मृतो दुःखभागी अयं जनः । अयमहं मन्ये ॥

(१४४) राजेति । उद्धृतशल्यमिव विषादशल्यं हृदयनिहितशोकशङ्कुमेव च तयोक्तं यत् कथयिष्यामि आमूलं वक्ष्यामि । ना पुंसि शल्यं शङ्कुर्ना इत्यमरः ॥

(१४५) विषादशल्योद्धारप्रकारमाह मोहादिति । हे सुतनु अधरं परिबाधमानः परिपीडयन् ते तव यो बाष्पबिन्दुरश्रुबिन्दुर्मया मोहात् प्रमादभ्रमात् पूर्वं प्रत्यादेशकाले उपेक्षितः न प्रोञ्छितः हे कान्ते अद्य आकुटिलेषु ईषत् कुञ्चितेषु पक्ष्मसु अक्षिलोमसु विलग्नं स्थितम् । कुञ्चितं नतम् । आविद्धं कुटिलमित्यमरः । तं बाष्पबिन्दुं प्रमृज्य प्रोञ्छ्य तावत् विगतानुशयो गतानुतापो भवामि । अथानुशयो दीर्घद्वेषानुतापयोरित्यमरः । वसन्ततिलकं नाम वृत्तम् ॥

(१४६) इतीति । यथोक्तमश्रुबिन्दुप्रमार्जनम् ॥

शकु ॥ प्रहृष्टरूपा अङ्गुरीयकं विलोक्य ॥ अज्जउत्त तं एदं अङ्गु-लीअअं । (१४७)

राजा ॥ अथकिम् अस्मादद्भुतोपलम्भान्मया स्मृतिरुप-लब्धा । (१४८)

शकु ॥ विसमं किदं क्खु इमिणा जं तदा अज्जउत्तस्स पच्चाअण-काले दुल्लहं आसी । (१४९)

राजा ॥ तेन हि ऋतुसमागमचिह्नं प्रतिपद्यतां लता कुसुमम् । (१५०)

---

(१४७) शकु इति । प्रहृष्टरूपा राज्ञेति शेषः । अज्जउत्तेत्यादि । आर्य-पुत्र तदिदमङ्गुरीयकम् । तदिति यदपायान्मयेयं दुर्दशेति भावः ।

(१४८) राजेति । अस्मादङ्गुरीयात् । अद्भुतम् आश्चर्यं उपलम्भो लाभो यस्य तत् तस्मात् । उपलब्धा प्राप्ता ॥

(१४९) शकु इति । विषममित्यादि । विषमं कृतं खल्वनेन यत् तदा आर्य-पुत्रस्य प्रत्यायनकाले दुर्लभमासीत् । विषममन्याय्यम् । अनेन अङ्गुरीयकम् । तदा प्रथमविस्मृतौ । प्रत्यायनकाले विश्वासनकाले । दुर्लभम् अनासन्नम् ॥

(१५०) राजेति । तेन इदानीमाश्वासादिना तत्त्वेन लता यथा ऋतुसमागमस्य वसन्तेन सह सम्बन्धस्य चिह्नं चिह्नभूतं कुसुमं पुष्पं प्रतिपद्यतां धारयतु । एतेन त्वं लतारूपमसि वसन्तोऽहं अङ्गुरीयकञ्चेदं कुसुममिवेति दर्शितम् । तथाच लता यथा वसन्तसमायोगात् कुसुमं धारयति तथा त्वमपि मत्समायोगात् इदमङ्गुरीयं धारयेत्यर्थः । अत्राप्रस्तुतैः ऋतुसमागमलताकुसुमैः साधर्म्यसुभिः प्रस्तुतस्य त्वं-समागमोचितमङ्गुरीयकं प्रतिपद्यस्वेत्यर्थस्य गम्यमानत्वादप्रस्तुतप्रशंसाख्यो-ऽलङ्कारः । तदुक्तं दर्पणे । क्वचित् विशेषः सामान्यात् सामान्यं वा विशेषतः । कार्यान्निमित्तं कार्यञ्च हेतोरथ समात्समम् । अप्रस्तुतात् प्रस्तुतञ्चेद् गम्यते पञ्चधा ततः । अप्रस्तुतप्रशंसा स्यादिति ॥

सकु ॥ ण मे विस्सेसेमि अज्जउत्तो ज्जेव णं धारेदु । (१५१)

तत प्रविशति मातलिः । (१५२)

मात ॥ दिष्ट्या धर्मपत्नीसमागमेन पुत्त्रमुखदर्शनेन चायुष्मान् वर्द्धते । (१५३)

राजा ॥ सुहृत्सम्पादितत्वात् साधुतरफलो मे मनोरथः मातले न खलु विदितोऽयमाखण्डलस्यार्थः । (१५४)

मात ॥ सस्मितम् ॥ किमीश्वराणां परोक्षम् एहि भगवान् मारीचस्ते दर्शनमिच्छति । (१५५)

राजा ॥ प्रिये अवलम्ब्यतां पुत्त्रः त्वां पुरस्कृत्य भगवन्तं द्रष्टुमिच्छामि । (१५६)

---

(१५१) सकु इति । णेत्यादि । नाहं विस्मरामि आर्यपुत्र एवैनं धारयतु । न विस्मरामि यद्भुजिगतं स्यात्तीति न प्रत्येमि ॥

(१५२) तत इति । सुगमम् ॥

(१५३) मातलिरिति । दिष्ट्या आनन्दे । वर्द्धते अभ्युदेति दिष्टिरभ्युदयोर्क्रिया-मित्यमरः । पत्नीलाभस्य पुत्त्रमुखदर्शनस्य चाभ्युदयरूपत्वादिति भावः ॥

(१५४) राजेति । सुहृदा भवता सम्पादितत्वात् परिचालितत्वात् मे मम मनोरथोऽभिलाषः साधुतरमतिशयेन साधु फलं यस्य स तथाभूतः । यतः शकुन्तलाभिलाषात् सपुत्त्रशकुन्तलालाभ इति भावः । खलु प्रश्ने । अयमर्थः शकुन्तलासमागम आखण्डलस्य महेन्द्रस्य न विदितः । अत्र वर्त्तमाने क्तः ॥

(१५५) मातलिरिति । ईश्वराणामैश्वर्यवतां किं परोक्षमगोचरम् किमपि नेत्यर्थः ॥

(१५६) राजेति । अवलम्ब्यतामाश्रीयताम् । पुरस्कृत्य अग्रे कृत्वा भगवन्तं मारीचम् ॥

अदितिः ॥ सम्भावणीअप्पहावा से आकिदी (१६३)

मातलि ॥ आयुष्मन् एतौ पुत्रप्रीतिपिशुनेन चक्षुषा दिवौकसां पितरावायुष्मन्तमवलोकयतः तदुपसर्प । (१६४)

राजा ॥ मातले (१६५)

प्राहुर्द्वादशधा स्थितस्य मुनयो यत्तेजसः कारणं
भर्त्तारं भुवनत्रयस्य सुषुवे यद्यज्ञभागेश्वरम् ।
यस्मिन्नात्मभुवः परोऽपि पुरुषश्चक्रे भवायास्पदं
द्वन्द्वं दक्षमरीचिसम्भवमिदं तत् स्रष्टुरेकान्तरम् ॥ (१६६)

---

(१६३) अदितिरिति । सम्भेत्यादि । सम्भावनीयप्रभावास्याकृतिः । सम्भावनीयो मन्तव्यः प्रभावः शक्तिर्यस्याः सा ॥

(१६४) मातेति । पुत्रेति । पुत्रस्य प्रीतिः स्नेहः पुत्रप्रीतिस्तत्पिशुनेन तत्सूचकेन । पिशुनौ खलसूचकावित्यमरः । दिवौकसां देवानाम् । माता च पिता च तौ पितरौ अदितिमारीचौ । उपसर्प उपगच्छ ॥

(१६५) राजेति । सुगमम् ॥

(१६६) प्राहुरिति । मातले मुनयो मन्वादयो यत् द्वन्द्वं मिथुनं कर्म्म द्वादशधा द्वादशप्रकारेण द्वादशमासतयेति यावत् । स्थितस्य वर्त्तमानस्य तेजसः सूर्य्यस्य कारणं उत्पत्तिस्थानं प्राहुः । उक्तं महाभारते । अदित्यां द्वादशादित्याः सम्भूता भुवनेश्वरा इति । तथा यत् द्वन्द्वं कर्त्तृ भुवनत्रयस्य स्वर्भूपातालात्मकस्य भर्त्तारं इन्द्रादिभिः पालयितारं यज्ञस्य भागो येषां ते यज्ञभागा देवास्तेषामीश्वरं प्रभुं मघं सुषुवे अजनयत् । तथा यस्मिन् द्वन्द्वे आत्मभुवः स्वयम्भवात् ब्रह्मणः परोऽपि । परतरोऽपि । ब्रह्मविष्णुशिवेषु विष्णोर्ब्रह्मणः परत्वख्यात्यादिति भावः । श्रेयोऽपीति ध्वनिः । पुरुषः पुमान् । पुंसि चात्मनि पुन्नागे विष्णौ च त्रिषु पूरुषे इति मन्दाभिधः । भवाय जन्मने आस्पदं पदं स्थानमिति यावत् । आस्पदं पदकृत्ययोरिति मन्दाभिधः । चक्रे कृतवान् । तदाह विष्णुपुराणम् । तत्र विष्णुश्च शक्रश्च जज्ञाते पुनरेव च इति । दक्षमरीचिसम्भवम् अतएव स्रष्टुर्ब्रह्मणः एकान्तरमेकेन पुरुषेण व्यवहितमिदं तत् द्वन्द्वं अदितिमारीचात्मकं स्त्रीपुंसौ । स्त्रीपुंसौ मिथुनं द्वन्द्वमित्यमरः । प्रश्नमयोऽयं श्लोकः । अन्वयः

मातलि ॥ अथ किम् । (१६७)

राजा ॥ प्रणिपत्य ॥ उभाभ्यामपि वां वासवनियोज्यो दुष्यन्तः प्रणमति । (१६८)

मारीच ॥ वत्स चिरं जीवन् पृथिवीं पालय । (१६९)

अदिति ॥ अप्पडिरधो होहि । (१७०)

शकुन्तला पुत्त्रसहिता पादयोः पतति । (१७१)

मारीच ॥ वत्से । (१७२)

---

सुताद् दक्षादुत्पन्नेयमदितिः मारीचश्चायं ब्रह्मसुतान्मरीचेः सम्भूत इति पौत्री पौत्रश्चानयोरदितिमारीचयोर्द्वयोरेव चतुरैकपुरुषव्यवहितत्वं मार्गाभिहितविष्णुपुराणमहाभारतप्रमाणादवगन्तव्यम् । यादृच्छिकोऽहितं उक्तम् ॥

(१६७) मातेति । सुगमम् ॥

(१६८) राजेति । प्रणिपत्य नम्रीभूय । वां युवाभ्याम् । उद्देश्यतामात्रविवक्षायां चतुर्थी । वासवनियोज्यो महेन्द्रकिङ्कर । नियोज्यकिङ्करप्रेष्यभुजिष्यपरिचारका इत्यमरः । वन्दितानां साहित्येनेति न्यायात् एकासनगतयोस्तयोः साहित्येनैव नमस्कारो न्याय्यत्व चादित्या पादस्पर्शनाभादभिवादनं परित्यज्य उभयोरेव प्रणिपातः कृत । तदुक्तं मनुना । गुरुपत्नीत युवतिर्नाभिवाद्येह पादयो । पूर्णविंशतिवर्षेण गुणदोषौ विजानता । तथा । कामन्तु गुरुपत्नीनां युवतीनां युवा भुवि । विधिवद्वन्दनं कुर्यादसावहमिति ब्रुवन्निति । अतएव शकुन्तलया पादस्पर्शपूर्वकमेव वन्दिष्यति ॥

(१६९) मारीति । सुगमम् ॥

(१७०) अदितिरिति । अप्पडीत्यादि । अप्रतिरथो भव । अप्रतिरथ नास्ति प्रतिरथ प्रतियोधो यस्य स ॥

(१७१) शकुन्तलेति । सुगमम् ॥

(१७२) मारीति । सुगमम् ॥

आखण्डलसमो भर्त्ता जयन्तप्रतिमः सुतः ।
आशीरन्या न ते योग्या पौलोमीमङ्गला भव ॥ (१७३)

अदितिः ॥ जादे भत्तुणो बहुमदा होहि अवस्स दीहाऊ उहय-पक्खं अलङ्करेदु एध उववीसध । (१७४)

सर्वे प्रजापतिमभित उपविशन्ति । (१७५)

मारीचः ॥ एकैकं निर्दिशन् । (१७६)

दिष्ट्या शकुन्तला साध्वी सदपत्यमिदं भवान् ।
श्रद्धा वित्तं विधिश्चेति त्रितयं तत् समागतम् ॥ (१७७)

---

(१७३) आखण्डलेति । भर्त्ता ते आखण्डलसमो वासवसमः सुतो जयन्तस्य पाक-शासनेः प्रतिमा सादृश्यं यस्य स तथोक्तः । अतस्ते तव सम्बन्धे अन्या अस्मदायेतरा आशीर्न योग्या उपयुक्ता त्वं पौलोम्याः पुलोमदुहितुः शच्या इव मङ्गलमवैधव्यं यस्याः सा तथोक्ता भव । पुलोमजा शचीन्द्राणीत्यमरः ॥

(१७४) अदितिरिति । जादे इत्यादि । जाते भर्त्तुर्बहुमता भव अयञ्च दीर्घायुरुभय-पक्षमलङ्करोतु एत उपविशत । अयं सर्वदमनः । उभयपक्षं मातापितृकुलम् । अलङ्करोतु शोभयतु । एतेति सर्वाभिप्रायेण ॥

(१७५) सर्वे इति । प्रजापतिं मारीचम् । अभ्युभयपरिसर्वत इति द्वितीया । अभितः अभिमुखे ॥

(१७६) मारीचेति । निर्दिशन् अङ्गुल्या दर्शयन् ॥

(१७७) दिष्ट्येति । दिष्ट्या आनन्दे । इयं साध्वी पतिव्रता शकुन्तला इदं सदपत्यं सत्पुत्रः अयं भवान् तत् तस्मात् श्रद्धा आस्थार्थे दृढप्रत्ययः । प्रत्ययो धर्मकार्येषु तथा-श्रद्धेत्यमरादाहृतेति देवः । वित्तं धनं विधिः प्रवर्त्तकवाक्यमिति कर्त्तव्यता एवं कर्मानुष्ठानं वा इति त्रितयं समागतं उपस्थितम् । साधुत्रितयमेतच्चित्रमपसदृशमित्यर्थः । तथाच शकुन्तला श्रद्धा सदपत्यमिदं वित्तं भवान् विधिरिवेति भावः । यद्यपि यथेदमसत्यं शकु-न्तलाद्वयनन्यं तथा वित्तं 'श्रद्धाविधिभ्यां न सन्यते' इति भट्टवैधर्म्यं भवति तथापि यथा श्रद्धा वित्तयोगात् विधिर्यान्यविधेयः कर्मानुष्ठानं वा लोकसम्पादिते तथा शकुन्तलासदपत्य

राजा ॥ भगवन् प्रागभिप्रेतार्थसिद्धिः पश्चाद्दर्शनमित्यपूर्वः खलु वोऽनुग्रहः । कुतः (१७८)

उदेति पूर्वं कुसुमं ततः फलं
घनोदयः प्राक् तदनन्तरं पयः ।
निमित्तनैमित्तिकयोरयं क्रम-
स्तव प्रसादस्य पुरस्तु सम्पदः ॥ (१७९)

माता ॥ आयुष्मन् एवं प्रसीदन्ति विश्वगुरवः । (१८०)

राजा ॥ भगवन् इमामाज्ञाकरीं वो गान्धर्वेण विवाहविधिनोपयम्य कस्यचित् कालस्य बन्धुभिरानीता स्मृतिशैथिल्यात् प्रत्यादि-

---

सम्बन्धाद्भवानपि मातुपतिवदुरत्वेनैवम् द्रष्टव्यम् । तथाचोक्तं देवलेन । नास्ति ह्यस्वधानस्य यज्ञंसत्वे प्रयोजनमिति । यज्ञपात्रपरिमितेन च । पितेति सद्भावे-दिव्येति ॥

(१७८) राजेति । अभिप्रेतस्य अभिलषितस्य सिद्धिर्निष्पत्तिः । सिद्धिर्निष्पत्तियोगयोरिति विश्वः । दर्शनं युष्माकमिति शेषः । इति हेतो मे युष्माकमनुग्रहोऽपूर्वो विचित्रः ॥

(१७९) वैचित्र्यं दर्शयति उदेतीति । पूर्वं प्राक् कुसुमं पुष्पमुदेति उद्गच्छति ततोऽनन्तरं फलं भवतीति शेषः । तथा प्राक् पूर्वं घनोदयो मेघोदयः तदनन्तरं तत्पश्चात् पयो वारि जायत इति शेषः । निमित्तं हेतुः नैमित्तिकं निमित्तजन्यं तयोः कारणकार्यभावयोरयं क्रमः पौर्वापर्यक्रमः सर्वत्र दृष्ट इति शेषः । तव प्रसादस्य त्वदनुग्रहस्य पुरो पूर्वे सम्पदः पुत्रकलत्रादिलाभरूपाः सम्पत्तयो भवन्तीति शेषः । अत्र दृष्टान्तोऽलङ्कारः । वंशस्थविलं वृत्तम् ॥

(१८०) मातेति । प्रसीदन्ति अनुगृह्णन्ति । विश्वगुरवो विश्वेषां निखिलानां गुरवो जन्महेतवः । उभयच कश्यपात्मकं जगदिति ॥

यदपराद्धोऽस्मि तत्रभवतो युष्मत्सगोत्रस्य कण्वस्य पश्चादेनामङ्गुरीयकदर्शनादूढपूर्वामवगतोऽहं तच्चित्रमिव मे प्रतिभाति । (१८१)

यथा गजे साधुसमक्षरूपे
कस्मिन्नपि क्रामति संशयः स्यात् ।
पदानि दृष्ट्वा च भवेत् प्रतीति-
स्तथाविधो मे मनसो विकारः ॥ (१८२)

मारीच ॥ वत्स अलमात्मापराधशङ्कया सम्मोहोऽपि त्वय्युपपन्न एव श्रूयताम् । (१८३)

---

(१८१) राजेति । आश्चर्यकरीं दाक्षीं शकुन्तलाविस्मयं । गान्धर्वेण अन्योन्य-समयपूर्वकेन । विवाहविधिना विवाहेतिकर्तव्यतया । उदयस्य परिणीय कस्यचित् कालस्येति अनन्तरमिति शेष । बन्धुभिर्बान्धवैः । प्रतिमोचित्वात् प्रतिषेधात् । अपराद्धः कृतापराधः । कस्य समक्षे इत्यत आह युष्मदित्यादि । युष्मदीयस्य भवत्सन्तते । सन्ततिगोत्रजनककुलाभोत्सव । अत्र युष्मत्सगोत्रस्येति पैतृत्वे तत्त्वप्रापयति महाभारतम् । यथा दुष्मन्तोपाख्याने मरीचि कश्यपं दुष्यन्त एवं तपोधनम् । भगिनोमत्रसंबाधं पराजितमसङ्ख्याम् । अपराध्य वनहारि सेनाभिदधराय च इति । अत्र कश्यपापत्यमस्युते एवमं गोत्रनादिपुरुषोऽस्येति सगोत्रमस्यापोषकृतिः । एनां शकुन्तलां ऊढपूर्वामवगत इत्यन्वयः । ऊढपूर्वां परिणीतपूर्वाम् । तत् प्रतिषेधित्वं पुनरङ्गुरीयदर्शनात् स्मरणमित्येतत् । चित्रमिव आश्चर्यमिव । प्रतिभाति प्रकाशते ॥

(१८२) यथेति । साधुसमक्षं प्रत्यक्षं रूपं यस्य स तस्मिन् कस्मिन्नपि कस्मिंश्चित् गजे पुरोऽपि क्रामति गच्छति सति संशयो गजोऽयं न वेति सन्देहः स्यात् अथानन्तरं गजे गते सतीत्यर्थः । पदानि पदचिह्नानि दृष्ट्वा यथा प्रतीतिर्गजस्तथा प्रत्ययो भवेत् मम मनश्चेतसो विकार तथाविधस्तत्प्रकारः । उपजातिर्वृत्तम् ॥

(१८३) मारीति । शङ्का भयम् । सम्मोहो भ्रम । उपपन्नो युक्त । श्रूयता सम्मोह बीजमिति शेष ॥

राजा ॥ अवहितोऽस्मि । (१८४)

मारीच ॥ यदैवाप्सरस्तीर्थावतरणात् प्रत्याख्यानविक्लवां शकुन्तलामादाय दाक्षायणीमुपगता मेनका तदैव ध्यानादवगतवृत्तान्तोऽस्मि दुर्व्वाससः शापादियं तपस्विनी सहधर्म्मचारिणी त्वया प्रत्यादिष्टा स चाङ्गुरीयदर्शनावसानः शाप इति । (१८५)

राजा ॥ सोच्छ्वासमात्मगतम् ॥ एष वचनीयान्मुक्तोऽस्मि । (१८६)

शकु ॥ स्वगतम् ॥ दिट्ठिआ अकारणपच्चादेसी ण अज्जउत्तो ण उण सत्तं अत्ताणं सुमरेमि अधवा ण सुदो सुण्णहिअआए मए अअं सावो जदो सहीहिं अच्चादरेण सन्दि

---

(१८४) राजेति । अवहित॰ साभिनिवेश॰ ॥

(१८५) मारीति । अप्सरस्तीर्थावतरणात् अवतीर्णाप्सरस्तीर्थात् तदभिहितो भावो द्रव्यवत् प्रकाशत इति न्यायात् । भूमिमवतीर्णादप्सरोयोनेरित्यर्थः । तीर्थं योनौ जलावतारेऽपीति हलायुध॰ । आदायेत्यनेनान्वयः । तथाच मेनकादेव्यात् काचिदप्सरोयोनि स्वयं सखी प्रत्याख्यानसमये भूमिमवतीर्य्य शकुन्तलामानीय मेनकामुपनीतवति मेनकातत्सख्याः सकाशात् तामादाय दाक्षायणीमुपगतेति तात्पर्य्यम् । अतएव पञ्चमे च पतिव्रतां तामन्य पराकष्ट॒ मुनुवते मेनका किल सख्यास्ते जन्मप्रतिष्ठेति तत्सखीजनादस्मि श्रुतवान् तत्सहचरीभिस्तयानीतेति हृदयमाशङ्कते इति राज्ञा अनुमिता । पञ्चमे विविक्त पयोधरा॒ इत्यस्य प्रतिबोधो इत्यनेन निश्चयोऽप्यपि राजसतानुमानस्य सन्निकल्प अङ्गीकृतः । प्रत्याख्यानेन अपतृत्तनिराकरणेन विक्लवां विह्वलाम् शकुन्तलामादाय मेनका यदैव दाक्षायणीमदितिमुपगता तदैवध्यानात् चिन्तनात् अवगतवृत्तान्तो विदितशाकल्योऽस्मि किमित्याकाङ्क्षायामाह दुर्व्वाससः इत्यादि । तपस्विनी अनुकम्पार्हा । सहधर्म्मचारिणा भर्त्ता । प्रत्यादिष्टा प्रत्याख्याता । अङ्गुरीयेति अङ्गुरीयदर्शनादवसानं समाप्तिर्यस्य सः ॥

(१८६) राजेति । सोच्छ्वासं सदीर्घनिश्वासम् । एषोऽहम् । वचनीयाविन्दावादात् ॥

ट्ठम्हि सो राआ जइ तुमं ण सुमरेदि तदा एदं अङ्गुलीअअं दंसेसित्ति। (१८७)

मारीच ॥ शकुन्तलां विलोक्य ॥ वत्से विदितार्थासि तदिदानीं सहधर्मचारिणं प्रति न त्वया मन्युः करणीयः। पश्य (१८८)

शापादसि प्रतिहता स्मृतिलोपरूक्षे
भर्त्तर्य्यपेततमसि प्रभुता तवैव।
छाया न मूर्च्छति मलोपहतप्रसादे
शुद्धे तु दर्पणतले सुलभावकाशा। (१८९)

राजा ॥ यथाह भगवान्।

---

(१८७) शकु इति। दिट्ठिआ इत्यादि। दिष्ट्या अकारणप्रत्यादेशी आर्यपुत्र। न पुनः आत्मानं स्मरामि अथवा न श्रुत शून्यहृदयया मयाऽयं शाप। यत सखीभ्यामत्यादरेण सन्दिष्टास्मि स राजा यदि त्वां न स्मरिष्यति तदा एतदङ्गुरीयकं दर्शयिष्यसीति। अकारणेति। अकारणपरित्यागीत्यर्थः। अयं शापप्रसादविषयम्। शून्यहृदयया अनवहितहृदयया। भर्त्तृप्रेरितमनसेत्यर्थः। न श्रुत इति। कुतोऽवधारितमित्यत आह यत इति। सन्दिष्टा उपदिष्टा तत्प्रकार-स्थित्यन्त ॥

(१८८) मारीचेति। विदितार्था विदितशापवार्ता। सहधर्मचारिणं भर्त्तारम्। मन्युः क्रोधः मन्युर्दैन्ये क्रतौ क्रुधीत्यमर ॥

(१८९) शापादिति। शापात् दुर्वाससः शापात् भर्त्तरि स्मृतिलोपात् विस्मरणात् रूक्षे स्नेहशून्ये सति त्वं प्रतिहता प्राप्तप्रतिघातासि तत्र न खिन्नासीत्यर्थ। भर्त्तरि अपेततमसि अपगतं तमो मोहो तस्य च तथोक्ते सति तवैव प्रभुता योग्यता भर्त्तृसहवासविषये इति शेष। तथाहि मलेन उपहतो विनष्ट प्रसाद स्वच्छता यस्य तत् तथोक्ते दर्पण-तले दर्पणस्वरूपे। अत्र स्वरूपयोरस्त्री तलमित्यमर। छाया प्रतिबिम्बं। छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातप इत्यमर। न मूर्च्छति न प्रसरति शुद्धे निर्मले तु दर्पणतले छाया सुलभावकाशा सुलभोऽव्याघातलब्धो अवकाशः स्थानं यया सा तथोक्ता भवति। अत्र दृष्टान्तोऽलङ्कारः। वसन्ततिलकं वृत्तम् ॥

मारीचः॥ वत्स कच्चिदभिनन्दितस्त्वया अस्माभिर्विधिवदनुष्ठितजातकर्मादिक्रियः पुत्र एष शाकुन्तलेयः। (१९१)

राजा॥ भगवन् अत्र खलु मे वंशप्रतिष्ठा। इति बालकं हस्तेन गृह्णाति। (१९२)

मारीचः॥ भाविनं चक्रवर्त्तिनमेनमवगच्छतु भवान्। पश्यतु। (१९३)

रथेनानुद्घातस्तिमितगतिना तीर्णजलधिः
पुरा सप्तद्वीपां जयति वसुधामप्रतिरथः।
इहायं सत्त्वानां प्रसभदमनात् सर्व्वदमनः
पुनर्यास्यत्याख्यां भरत इति लोकस्य भरणात्॥ (१९४)

राजा॥ भगवत्कृतसंस्कारेऽस्मिन् सर्व्वमाशंसे। (१९५)

---

(१९०) राजेति। सुगमम्॥

(१९१) मारीचेति। कच्चिदितीष्टप्रश्ने। कच्चित् कामवेदने इत्यमरः। अस्माभिर्विधिवत् यथाविधि अनुष्ठिता कृता जातकर्मादिक्रिया यस्य स एष शाकुन्तलेयः शकुन्तलायाः पुत्रस्त्वया अभिनन्दितः कच्चित्॥

(१९२) राजेति। अत्र खलु अनेन पुत्रे इत्यर्थः। वंशप्रतिष्ठा कुलस्य गौरवम्। प्रतिष्ठा गौरवे स्थिताविति मेदिनी॥

(१९३) मारीचेति। भाविनं भविष्यन्तम्। चक्रवर्त्ती भविष्यतीत्यवगच्छतु इत्यर्थः॥

(१९४) रथेनेति। अनुद्घातेन अभूतलसम्पर्कोद्घट्टनेन स्तिमिता अचञ्चला गतिर्यस्य स तेन रथेन। स्तिमितोऽचञ्चले क्लिन्ने इति विश्वः। स्थिरगतिनेति यावत्। तीर्णजलधिर्लङ्घितार्णवः अप्रतिरथोऽप्रतिद्वन्द्वी सन् अयं शाकुन्तलेयः पुरा अग्रे सप्तद्वीपां वसुधां भूमिं जयति। यावत् पुराभ्यां भव्य इति भविष्यति लट्। अथ इह सत्त्वानां प्राणिनां प्रसभदमनात् बलेन शासनात् सर्व्वदमनः सर्व्वदमनसंज्ञोऽयं पुनर्लोकस्य भुवनस्य भरणात् भरत इति आख्यां संज्ञां यास्यति प्राप्स्यति। इदं शिखरिणी नाम वृत्तम्॥

अदिति ॥ इमाए दुहिदिमनोरहसम्पत्तीए कखो दाव सुदवित्थारो करीअदु दुहिदिवच्छला मेणआ उण इध मं परिचरन्ती सणिहिदा ज्जेव । (१९६)

यज्ञ ॥ आत्मगतम् ॥ मणोगदं मे वाहरिदं भअवदीए । (१९७)

मारीच ॥ तपःप्रभावात् सर्व्वमिदं प्रत्यक्षं तत्रभवतः कण्वस्य । (१९८)

राजा ॥ अतः खलु ममानतिक्रुद्धो मुनिः । (१९९)

मारीच ॥ तथाप्यसौ दुहितुः सपुत्त्रायाः पत्या परिग्रहमिय-मस्माभिः आवयितव्यः । क, कोऽत्र भोः । (२००)

---

(१९५) राजेति । भगवता भवता जातकसंस्कारे कृते अस्मिन् पुत्रे सर्वमङ्गल भाग्यं मन्यामये ॥

(१९६) अदितिरिति । इमाए इत्यादि । अस्या दुहितृमनोरथसम्पत्तेः कण्व-स्तावत् श्रुतविस्तारः क्रियताम् । दुहितृवत्सला मेनका पुनरिह मां परिचरन्ती सन्नि-हितैव । दुहितुर्मनोरथस्य प्रियसमागमाभिलाषस्य सम्पत्तेः परिणामस्य श्रुतो विस्तारो येन स तथोक्तः क्रियताम् । अस्या दुहितृमनोरथसम्पत्तेः विस्तारः श्राव्यतामित्यर्थः । दुहितृवत्सला दुहितृस्नेहवती परिचरन्ती शुश्रूषमाणा सन्निहिता उपस्थिता ॥

(१९७) यज्ञ इति । मणो इत्यादि । मनोगतं मे व्याहृतं भगवत्या । भगवत्या अदित्या ॥

(१९८) मारीति ॥ तपःप्रभावात् तपःशक्तेः । प्रत्यक्षमनुभूयमानम् । तत्रभवतो नैष्ठिकब्रह्मचारित्वेन श्लाघ्यस्य ॥

(१९९) राजेति । अतः तपःप्रभावविदिताखिलवृत्तान्तत्वात् । मम सम्बन्धे । अनतिक्रुद्धः दुर्व्वासःशापवशत्वेन मदपराधाभावादिति भावः ॥

(२००) मारीति । तथापि तपःप्रभावप्रत्यक्षीकृताशेषवृत्तान्तत्वेऽपि । दुहितुः सपु-त्रायाः । पत्येत्यादि । अभ्युपगमपरिग्रहरूपं प्रियमिदमर्थः । क क इति । भोः अत्र क क वर्त्तते इति शेषः ॥

प्रविश्य शिष्य ॥ भगवन्नयमस्मि । (२०१)

मारीच ॥ वत्स गालव मद्वचनादिदानीमेव वैहायसागत्या तत्रभवते कण्वाय प्रियमावेदय तथा पुत्त्रवती शकुन्तला दुर्वाससः शापनिवृत्तौ स्मृतिमता दुष्यन्तेन परिगृहीतेति । (२०२)

शिष्य ॥ यथाज्ञापयन्ति गुरवः । इति निष्क्रान्त । (२०३)

मारीच ॥ राजानं प्रति ॥ वत्स त्वमपि साप्यदारः सख्युराखण्डलस्य रथमारुह्य स्वां राजधानीं प्रतिष्ठस्व । (२०४)

राजा ॥ सप्रणामम् ॥ यदाज्ञापयति भगवान् । (२०५)

मारीच ॥ सम्प्रति हि (२०६)

तव भवतु विडोजाः प्राज्यवृष्टिः प्रजासु
त्वमपि विततयज्ञो वज्रिणं प्रीणयालम् ।
युगशतपरिवर्त्तैरेवमन्योन्यकृत्यै-
र्नयतमुभयलोकानुग्रहश्लाघनीयैः ॥ (२०७)

---

(२०१) प्रविश्येति । अयमस्मीति शेष ॥

(२०२) मारीति । वैहायसा आकाशोचितया । पुंस्याकाशविहायसी इत्यमरः । आवेदनीयमाह यथेत्यादि इत्यन्तम् ॥

(२०३) शिष्य इति । सुगमम् ॥

(२०४) मारीति । साप्यदारः अपत्यदारैः सहितः । आखण्डलस्य इन्द्रस्य । राजधानीं प्रधाननगरीम् । प्रधाननगरी राज्ञां राजधानीति कथ्यते इतिहलायुधः । प्रतिष्ठस्व गच्छ ॥

(२०५) राजेति । सुगमम् ॥

(२०६) मारीति । सम्प्रति यदभीष्टं भवत्विति श्लोकीयेनान्वयः ॥

(२०७) तवेति । वेवेष्टीति विट् विट् व्यापकमोजस्तेजो यस्य स विडोजा इन्द्रः । इन्द्रो मरुत्वान् मघवा विडोजा पाकशासन इत्यमरः । तव प्रजासु प्राज्या प्रचुरा वृष्टिर्यस्मात् स तथोक्तो भवतु । प्रभूतं प्रचुरं प्राज्यमित्यमरः । त्वमपि विततो विहितो यज्ञो येन स तथाभूत सन् वज्रिणं वासवं अलं पर्याप्तं प्रीणय यज्ञभागैस्तर्पय ।

राजा ॥ भगवन् यथाशक्ति श्रेयसे यतिष्ये । (२०८)

मारीचः ॥ वत्स । किन्ते भूयः प्रियमुपहरामि । (२०९)

राजा ॥ अतः परमपि प्रियमस्ति तथाप्येतदस्तु । (२१०)

प्रवर्त्ततां प्रकृतिहिताय पार्थिवः
सरस्वती श्रुतिमहती न हीयताम् ।
ममापि च क्षपयतु नीललोहितः
पुनर्भवं परिगतशक्तिरात्मभूः ॥ (२११)

इति निष्क्रान्ताः सर्वे । सप्तमोऽङ्कः ॥ (२१२)

इति महाकविकालिदासविरचितमभिज्ञानशकुन्तलं नाम
नाटकं समाप्तम् ॥

---

युगपत् व्याप्य परिवृत्तैर्जातविनिमयैस्तथा उभय लोकयोः स्वर्गमर्त्ययोरनुग्रहेण स्थितचेष्टया श्लाघनीयैः प्रशंसनीयैः । तव इन्द्रस्य स्वर्गस्थितचेष्टया वज्रिणस्तु मर्त्यस्थितचेष्टया श्लाघनीयैरित्यर्थः । एवमुक्तप्रकारैरन्योन्यकृत्यैः परस्परकर्मभिरुभयतत्कर्मणा वर्त्तेथां युवामिति शेषः । शालिनि नाम वृत्तमिदम् ॥

(२०८) राजेति । शक्तिमनतिक्रम्य यथाशक्ति । अनतिक्रमार्थेऽव्ययीभावः । श्रेयसे कल्याणाय ॥

(२०९) मारीति । भूयः पुनस्ते तव सम्बन्धे किं प्रियमुपहरामि उपनयामि ॥

(२१०) राजेति । अतः अपत्यदारसमागमात् परमितरत् । अपि॰ प्रश्ने । इदानीं गृहीतराजभूमिक एव निजवचनमाह तथापीत्यादि । एतदारभ्य वस्तुतो दुष्मन्त एव तदानीमेव सूत्रधार इति न मन्तव्यम् । तथापि दुष्मन्तेनेतरप्रियस्यानभ्यर्थनीयत्वेऽपि । एतत् वक्ष्यमाणम् ॥

(२११) प्रवर्त्ततामिति । पार्थिवः क्षितिपः प्रकृतीनां पौरवर्गाणां हिताय प्रवर्त्ततां प्रवृत्तिमान् भवतु । प्रकृतिर्गुणसाम्ये स्यादमात्यादिस्वभावयोः । योनौ लिङ्गे पौरवर्गे इति मेदिनी । तथा श्रुतौ श्रवणविषये महती प्रशस्ता सरस्वती वाणी कविकृतभारतीत्यर्थः । न हीयतां लोकैर्नावज्ञायताम् । अपि च आत्मना भवतीत्यात्मभूः स्वकृतजन्मपरिग्रहः अत परिगता प्राप्ता शक्तिर्जन्मनिवारणसामर्थ्यं यस्य सः । परिगत लिप्सु प्राप्ते विस्तृतवान

# शुद्धिपत्रम् ।

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | ४ | मन्योऽपि | मन्योपि |
| २ | १८ | सूर्येन्द | सूर्येन्दु |
| २ | २४ | वत्तमाने | वर्त्तमाने |
| ३ | १९ | वाभिस्तरेण | वाग्विस्तरेण |
| ३ | २९ | तस्मोदा | तस्मादमी |
| ४ | ११ | मध | मुध |
| ५ | ११ | नखे | न्खे |
| ५ | १४ | मखे | म्खे |
| ६ | २७ | पुष्पक्षे | पुष्पचे |
| १४ | ३ | समो | सोम |
| १४ | ९ | यापा | यासा |
| १७ | १२ | दीपो | दीनो |
| १७ | २४ | मद्भूत | मद्भुत |
| १८ | १६ | रत्नात्म | रत्नात्म |
| १९ | २७ | यन्मयसे | मन्मयसे |
| १९ | २९ | मिमात्मरः | मित्यमरः |
| १९ | २९ | साम्य | साभ्या |
| २० | ११ | सुड | सुडु |
| २० | १८ | मसे | समे |
| २२ | १८ | पणमित | पणमित |
| २२ | १३ | समय | समब |
| २५ | ११ | योवन | यौवन |
| २९ | ११ | भ्रमर | भ्रमर |

।

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ६१ | २४ | उपेन्द्र | इन्द्र |
| ६२ | १२ | रक्षनियोग | स्तनियोग॰ |
| ६३ | ३ | वर्द्धयिस्य॰ | वर्द्धस्व |
| ६३ | १३ | तिद्दू | त्रिद्दू |
| ६६ | २१ | समुस्या | समुपस्था |
| ६७ | २ | स्वभावा | स्वभावा |
| ६७ | १६ | निमित्वेन | निमित्तेन |
| ६७ | २१ | भाव | भाव |
| ६९ | ४ | दमत्या | ददत्या |
| ७१ | २६ | भूजे | भुजे |
| ७२ | १२ | चत्वापा | चत्वामा |
| ७४ | ७ | आपत्तिश्चदो | आपत्तिश्चते |
| ७५ | २४ | भवास | मूलम् |
| ७९ | २८ | समदान | समदना |
| ८१ | १३ | इन्द्र | इन्दु |
| ८३ | ७ | वभितव्यम् | भवितव्यम् |
| ८३ | २२ | नचून | नपून् |
| ८३ | २३ | ऽभ्यथना | ऽभ्युसना |
| ८५ | १९ | क्षिर | क्षिर |
| ८५ | १९ | निध्यान | निध्यान॰ |
| ८७ | १० | मण | मण |
| ८८ | २२ | वपद्रुत | वपद्रुत |
| ८९ | १ | वत्तु | कत्तु |
| ९४ | २६ | स्थाने | स्थाने |
| ९७ | २१ | इत्याति | इत्यादि |
| ९८ | १५ | मायात | मायत |
| ९८ | २९ | अभ्युप | अभ्युप |
| ९९ | ३ | मनस्चेन | उनस्चेण |

# शुद्धिपत्रम् ।

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १०७ | १ | मे | नः |
| १०७ | २६ | तन्मर्षयतु | मर्षयतु |
| १०२ | ८ | दति | इति |
| १०७ | ४ | कटिन॰ | कठिन॰ |
| १०८ | १० | अम्ब्यु को | अम्बुको |
| १०८ | २० | पिय | प्रिय |
| १०८ | २१ | दयन | दर्पन |
| १०९ | २ | पिपास | पिपासा |
| ११० | २२ | द्वेन | दैवेन |
| १११ | २२ | सज्ञा | सज्ञा |
| १११ | २४ | गगण | गगन |
| ११५ | ५ | पड॰ | पद॰ |
| ११५ | ७ | दाणि | दाणि॰ |
| ११५ | २५ | कोमगर्भौ | कोमगर्भौ |
| ११६ | २३ | आनन्त्ये | आमन्त्ये |
| ११७ | २५ | मुनादिना | मुण्डनादिना |
| ११८ | २२ | रङ्गमे | रङ्गभूमे |
| १२१ | १२ | निरुरयन्ति | निरुरयन्ति |
| १२१ | १४ | प्रतिनत्तुस्ते | प्रतिपत्तुस्ते |
| १२१ | २१ | नीमेत्यय॰ | नीयेत्यर्थं नायत् |
| | १ | मोड्ड | मोड्ड |
| १२२ | २ | कथमिति | कथमतिपि॰ |
| १२२ | १४ | स्वझोप्यति | पझोप्यति |
| १२५ | १ | आग्यसिद्ध॰ | समाग्यसिद्ध॰ |
| १२६ | ६ | ज्ञामपि | ज्ञागतः |
| १२६ | १७ | एव | एवएव |
| १२६ | १७ | समान्द्राश्रिद्ध॰ | समान्द्रसिद्ध॰ |
| १२६ | १२ | अमेनि | अमेति |
| १२७ | २४ | प्रदि | प्रदि |
| १२८ | | | |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १२८ | २८ | वंधी | वुंधा |
| १३० | २४ | दणु | दत्त |
| १३१ | ३ | दति | इति |
| १३४ | ४ | सविषयम् | सविषय |
| १३५ | १३ | सखिनी | मखिनी |
| १३७ | २० | कप | कप् |
| १३८ | ८ | मह्योषी | महिषी |
| १३८ | १८ | निषीदताम् | निषीदतम् |
| १४१ | १४ | काशादि | काशादि |
| १४१ | १५ | पुष्करा | पुष्करा |
| १४१ | ११ | स्टहिणी | स्टहिणी |
| १४१ | १६ | मूषण | भूषण |
| १४४ | ८ | यास्मिंश्चेत्र | यस्मिंश्चेत्र |
| १४४ | १० | नियतैव | नियतैव |
| १४५ | १ | क्षुम | क्षुम |
| १४५ | ७ | क्षुप्तानि | क्षुप्तानि |
| १४५ | ८ | समिद्धन्तो | समिद्धन्तो |
| १४५ | २१ | कणोत्कस्या | कणोत्कस्या |
| १४६ | १ | वत्से | वत्से |
| १४६ | ४ | मधुषी | मधुषी |
| १४६ | ० | भोभो | भोभोः |
| १४७ | ५ | सनिष्क्रमा | सविष्क्रमा |
| १४८ | १२ | मत | मत |
| १५० | २३ | पन्यन | पन्याम |
| १५१ | १ | सुपेत्व | सुपेत्य |
| १५२ | १२ | ए षा | एषा |
| १५१ | १५ | वचनम् | वचनम् |
| १५२ | १० | तुवं | तुषं |

# शुद्धिपत्रम् ।

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १५२ | १० | भिश्राभि | मिश्राभि |
| १५३ | १ | वतुमे | वतुसे |
| १५३ | १३ | नथा | यथा |
| १५४ | २१ | नातिकिनी | नालीकिनी |
| १५५ | १० | पुरस्कृत्य | पुरस्कृत्य |
| १५६ | ५ | शुश्रूषस्व | शुश्रूषस्व |
| १५६ | २२ | जनश्चेति | जनचेति |
| १५६ | २४ | प्रतिपोन्य | प्रतीपोन्य |
| १५७ | १३ | घ्यञन | व्यञन |
| १५७ | १८ | एम | एत |
| १६० | ७ | मान्य | मान्यै |
| १६२ | ६ | मौका | मोका |
| १६३ | १२ | स्वीत्कार | स्वीकार |
| १६३ | १५ | प्ररिपोष | परिपोष |
| १६५ | १६ | निचयो | निचय |
| १६५ | १८ | वुषि | वृंषि |
| १६५ | २२ | रसमति | रस्रवति |
| १६७ | २० | मपते | सुपते |
| १६८ | ११ | जम्य | जम्बु |
| १६८ | १२ | दे यो | दु यो |
| १६८ | २१ | चक्षुर्बेच | चतुर्बेच |
| १६८ | २१ | तानृ | तामृ |
| १७० | १ | विसमय | विशमय |
| १७० | १० | सास्व | सास्त्र |
| १७१ | २ | कन्यापश्चौ | कन्यापश्चौ |
| १७१ | १८ | हास | हास |
| १७२ | १२ | कृत | कृत |
| १७२ | १८ | विश्वोदरौ | प्रश्नोदरौ |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १७३ | ४ | तव | भव |
| १७३ | ८ | स्टष्टीत | स्टष्टीतः |
| १७७ | ३ | विदधा | वीदधा |
| १७७ | २१ | द्रष्ट | द्रष्टुं |
| १७८ | २० | तधापि | तथापि |
| १७७ | ४ | विप- | विपु- |
| १७९ | ७ | ययमो | ययमि |
| १७९ | २५ | देद | देह |
| १८० | १४ | त्यनु | त्यम् |
| २८० | १९ | मूखे | मूर्ध्ने |
| १८३ | ३ | विचि | विचि |
| १८३ | १५ | प्रकागम् | प्रकामम् |
| १८५ | ५ | माधर्य्यं | माधुर्य्यं |
| १८५ | १९ | त्यादी | त्यादि |
| १८५ | २२ | सुप | सुप |
| १८७ | ८ | व्यसन | व्यसनु |
| १८७ | १४ | व्यैयाः | व्यैयाः |
| १८८ | ६ | भवन्त्रिय | भवन्त्रिय |
| १८८ | १६ | नर्म | नर्म |
| १८८ | १९ | कच | कच |
| १८८ | २१ | यस्मा | यस्माः |
| १८८ | २४ | पतूसे | पतूसे |
| १८९ | १८ | दस्य | दस्यु |
| १८९ | १८ | सुता | सुता |
| १९० | ८ | स्वगत | स्वगत |
| १९० | २६ | अव्यय | मव्यय |
| १९१ | १२ | माधो | माधे |
| १९१ | १७ | मत्री | पत्नी |

# शुद्धिपत्रम् ।

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १८१ | २२ | मन्या | मून्या |
| १८२ | २५ | तवात | तावत् |
| १८३ | १४ | दीर्घापाङ्गौ | दीर्घापाङ्गौ |
| १८३ | २१ | भधु | मधु |
| १८३ | २४ | श्रुतं | श्रुतं |
| १८३ | ८ | सर्व्वं | सर्व्वं |
| १८४ | २२ | मत्यस्य | मपत्य |
| १८६ | १६ | मश्र | माश्र |
| १८६ | २१ | यस्या | यस्याः |
| १८८ | १ | साद्रूपम् | साद्रूयम् |
| १८८ | ७ | सम्याय | सन्धाय |
| २०० | २४ | मित्यर्थं | मित्यर्थः |
| २०१ | २ | यौवनै | यौवने |
| २०१ | २४ | स्वातन्त्य | स्वातन्त्र |
| २०२ | ८ | परास्नुपी | परास्नुपी |
| २०३ | २० | विकल्प | विकल्पे |
| २०४ | १६ | व्यक्तै | व्यूक्तै |
| २०५ | १ | मकुल्मचा | मकुल्मचा |
| २०५ | १ | चित्तन्वयति | चिन्तयति |
| २०५ | ११ | सर्पुं | सर्पं, |
| २०७ | ८ | सिद्य | पिद्य |
| २०८ | १८ | स्नुषा | स्नुषा |
| २०८ | १४ | गरिष्ठ | गारिष्ठ |
| २०८ | १० | बुभि | बुधि |
| २१५ | १६ | ष्याक्षोतिति | ष्याक्षोदिति |
| २१५ | २५ | परस्य | परवस्य |
| २१६ | ११ | दरेणु | दुरेण्य |
| २१६ | १३ | नरकः | नारकः |

# शुद्धिपत्रम् ।

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २३७ | ११ | ममागम | समागम |
| २३७ | १८ | प्यऽभवि | प्यभवि |
| २३७ | २२ | मखीति | सखीति° |
| २३७ | २६ | ममापि | ममापि° |
| २३८ | १५ | अवद्ध्रियते | अवद्ध्रियते |
| २३८ | १ | नातुष्टितम् | नातुष्ठितम् |
| २३९ | ७ | इदस्य | इमस्य |
| २४० | ९ | भयघीतस्य | भयभीतस्य |
| २४० | १२ | वोय | कय |
| २४० | २१ | निनम्न° | निमग्न° |
| २४१ | १ | अचतनं | अचेतनं |
| २४१ | १८ | मर्व्वं | सर्व्वं |
| २४२ | २५ | देयेप कि | देयेषु किं |
| २४३ | १० | खाद्ड | स्वाद्ड |
| २४३ | १२ | नद्या | नद्या |
| २४३ | १९ | शूर्प° | शूर्प° |
| २४४ | २१ | नक्ता | त्यक्ता |
| २४५ | १६ | खेल्वेमः | खर्वेमः |
| २४६ | ८ | पक्षय | पक्षय |
| २४६ | १२ | विति । | विति |
| २४६ | १९ | निवेशा | विनिवेशा |
| २४७ | ६ | श्रूयताम् | श्रूयताम् |
| २४८ | ४ | लेखित्त | लेखितं° |
| २४९ | १९ | आचार्यं | आचार्यं |
| २५० | २४ | प्रतिपयो | प्रतीपयो |
| २५१ | १६ | भ्रगर | भ्रमर |
| २५१ | २४ | इव | एव |
| २५२ | १२ | विमलम्भो | विप्रलम्भो |

| पृष्ठे | | पङ्क्तौ | | अशुद्धम् | | शुद्धम् |
|---|---|---|---|---|---|---|
| २६५ | ... | १४ | ... | मिलेति | ... | मिश्रेति |
| २६५ | ... | २१ | ... | पयोतुगम | ... | पयोद्गम |
| २६७ | ... | १८ | .. | निष्या | ... | निंष्या |
| २६८ | ... | ७ | ... | भूतल्ले | ... | भूयन्ले |
| २६८ | ... | १५ | .. | नोय | ... | नीख |
| २७० | ... | १२ | ... | पयेड्ं | ... | पयोऽर्ह |
| २७१ | .. | ६ | ... | स्निरो | ... | स्निरो |
| १०१ | ... | २४ | . | यत्तं | ... | यत्तं |
| २७१ | ... | १७ | ... | मितव्य | ... | मिश्रस्य |
| १०६ | .. | ८ | ... | यथा | ... | रथा |
| २७८ | ... | १ | ... | घर | ... | घरे |
| २७८ | ... | १२ | ... | रिन्द्रिस | ... | रिन्द्रस |
| २७९ | ... | १ | ... | सौभाग्थ | ... | सौभाग्य |
| २७९ | ... | १६ | ... | तुर | ... | द्दर |
| २८१ | ... | १९ | ... | र्त्तिन | ... | वर्त्तिन |
| २८२ | ... | ५ | ... | शिखरा | ... | शिखरा |
| २८३ | ... | १६ | ... | सर्व्वतः | ... | पर्व्वतः |
| २८५ | ... | १३ | ... | क्रुतोः | ... | क्रतोः |
| २८८ | ... | १५ | ... | हष्टे वे | ... | हृष्टे वे |
| २८८ | ... | २१ | ... | दाव्रा | ... | दात्रा |
| २८९ | ... | ५ | ... | वरिवर्त्तते | ... | परिवर्त्तते |
| २८९ | ... | १५ | ... | लच्चणो | ... | लक्ष्मणो |
| २९० | ... | ९ | ... | एव | ... | इव |
| २९३ | ... | १ | .. | समद्ट | ... | समद्रुद्र |
| २९३ | ... | २३ | ... | तेत् | : | तत् |
| २९५ | ... | ५ | ... | कथयति . | ... | कथयति |
| २९५ | .. | ९ | .. | निर्वृतिं | ... | निर्वृतिं |
| २९५ | . | २६ | . | मक्तरोद्देण | . | मरोद्देण |
| २९६ | .. | १० | ... | कारीण | . | कारिण |

| पृष्ठे | | पङ्क्तौ | | अशुद्धम् | | शुद्धम् |
|---|---|---|---|---|---|---|
| २९० | ... | १४ | ... | यनित्यत्वं | ... | यनित्यत्वं |
| २९९ | ... | १ | ... | यतुमे | ... | यतुर्थे |
| २९९ | ... | २० | ... | रोति | ... | रिति |
| ३०० | ... | १३ | ... | यथाया | ... | यथया |
| ३०१ | ... | १० | ... | मद्भुतं | ... | मद्भुतं |
| ३०२ | ... | २० | ... | न त्यम् | ... | न यद्युत्यम् |
| ३०३ | .. | २४ | ... | सा ध्वी | ... | साध्वी |
| ३०७ | ... | ३ | ... | साण | ... | साणु |
| ३०७ | ... | १० | ... | बाधः | .. | बधः |
| ३०९ | ... | ११ | ... | यत्सनेन | ... | यत्नेन |
| ३१० | ... | १ | ... | पिण्डे येति | ... | पिण्डयेति |
| ३११ | ... | १८ | ... | योपन | ... | योक्य |
| ३१४ | ... | १ | ... | जयन्य | .. | जयन्त |
| ३१४ | ... | ११ | ... | पेक्षस्याः | ... | पोक्षोस्याः |
| ३१४ | ... | २० | ... | तथा | ... | तदा |
| ३१४ | ... | २५ | ... | विथि | ... | विधि |
| ३१५ | ... | ११ | ... | यम्भं | ... | यम्भं |
| ३१५ | ... | १४ | ... | ऽपूर्वोरिं | ... | ऽपूर्व्वोंवि |
| ३१५ | ... | १९ | ... | सम्भवयोः | ... | सम्भवयो |
| ३१६ | ... | १० | ... | तथाः । | ... | तथा । |
| ३१७ | ... | १ | .. | तोऽसि | ... | तोऽस्मि |
| ३१७ | .. | १५ | ... | वति | ... | वती |
| ३१७ | ... | १६ | . | पराबद्ध | . | पराबद्धु |
| ३१७ | ... | १८ | .. | मितां । | .. | मितम् । |
| ३१७ | ... | १९ | .. | क्षतां । | ... | क्षतम् । |
| ३१८ | .. | ८ | : | युक्ते | .. | युक्ते |
| ३१८ | ... | २० | . | लिग्ना | . | लग्ना |
| ३१९ | .. | १८ | .. | तमि | | भवि |

| पृष्ठे | | पङ्क्तौ | | अशुद्धम् | | शुद्धम् |
|---|---|---|---|---|---|---|
| ३१८ | ... | २३ | ... | सच | ... | सचा |
| ३२० | ... | १६ | ... | शुश्रूमाणा | ... | शुश्रूषमाणा |
| ३२१ | ... | ३ | ... | तथा | ... | यथा |
| ३२१ | ... | ६ | ... | सक्यु | ... | सख्युर |
| ३२१ | ... | ११ | ... | यत्तौ | ... | यत्तो |
| ३२२ | ... | ३ | ... | भक्ति | ... | शक्ति |
| ३२२ | ... | ३ | ... | तथा | ... | तथा |
| ३२२ | ... | ५ | ... | श्रीवताम् | ... | श्रीयताम् |
| ३२२ | ... | २१ | ... | प्रौर | ... | पौर |
| ३२२ | ... | २२ | ... | प्रवित्ति | ... | प्रवृत्ति |
| ३२२ | ... | २२ | ... | पवादि | ... | प्रकृति |
| ३२२ | ... | २२ | ... | माचादि | ... | माल्यादि |
| ३२२ | ... | २३ | ... | श्वतौ | ... | श्रुतौ |
| ३२२ | ... | २५ | ... | घात | ... | ज्ञात |
| ३२३ | ... | १ | ... | मेदिनि | ... | मेदिनी |
| ३२३ | ... | २ | ... | नान्दि | ... | नान्दी |
| ३२३ | ... | ३ | ... | कविम्मा | ... | कविया |
| ३२३ | ... | ५ | ... | सुखैः। | ... | सुधैः। |
| ३२३ | ... | ६ | ... | गुरु | ... | गुरुः |
| ३२३ | ... | ८ | ... | मितर्थः। | ... | मित्यर्थः |